शर्करोदकं, क्ली, ( शर्करायुक्तमुदकम् । ) शर्करायुक्तजलम् । चिनिरपाना इति शरवत् इति च भाषा । यथा,—

"अनेन शीतलेनैव घोलिता शुभ्रशर्करा ।
एलालवङ्गकर्पूरमरिचैश्च समन्विता ॥
शर्करोदकनाम्नैतत् प्रथितं विदुषां सुखे ।
शर्करोदकमाख्यातं शुक्रलं शिशिरं सरम् ॥
बल्यं रुच्यं लघु स्वादु वातपित्तासनाशनम् ।
मूर्च्छाच्छर्द्दितृषादाहज्वरशान्तिकरं परम् ॥"
इति भावप्रकाशः ॥

शर्द्धः, पुं, (शृधु शब्दकुत्सायाञ्च + घञ् ।) अपानोत्सर्गः । शृधधातोर्घञ्प्रत्ययेन निष्पन्नमेतत् ॥ ( तेजः । यथा, ऋग्वेदे । ४ । १ । १२ ।
"प्र शर्द्ध आर्त्त प्रथमं विपन्या ॥"
"शर्द्धस्तेजः ।" इति तद्भाष्ये सायणः ॥
समूहः । यथा, तत्रैव । १ । ६४ । १ ।
"वृष्णे शर्द्धाय सुमखाय वेधसे ।"
"शर्द्धाय समूहाय ।" इति तद्भाष्ये सायणः ॥
प्रसहनशीले, त्रि । यथा, तत्रैव ।१।१२७।८
"प्रवः शर्द्धाय घृष्वये त्वेष द्युम्नाय शुष्मिणे ।"
"शर्द्धाय प्रसहनशीलाय ।" इति तद्भाष्ये सायणः ॥)

शर्द्धंजहः, पुं, ( शर्द्धं जहातीति । हा + "एजेः खश् ।" ३ । २ । २८ । इत्यत्र । "वातशुनीतिलशर्द्धेष्विति ।" खश् । "अरुर्द्विषदजन्तस्य मुम् ।" ६ । ३ । ६७ । इति मुम् । ) माषः । यथा । शर्द्धं आर्द्रत्वं जहाति इति शर्द्धंजहो माषः । इति मुग्धबोधव्याकरणटीकायां दुर्गादासः ॥

शर्द्धनं, क्ली, ( शर्द्ध + ल्युट् । ) अधोवायुः । इति मनुटीकायां कल्लूक-भट्टः ॥ वातकर्म्म इति भाषा ॥

शर्ब्ब, हिंसे । गतौ । इति कविकल्पद्रुमः ॥ शर्ब्बति । इति दुर्गादासः ॥

शर्म्म, [न्] क्ली, ( शृ + "सर्व्वधातुभ्यो मनिन् ।" उणा० ४ । १४४ । इति मनिन् । ) सुखम् । इत्यमरः ॥ ( यथा, ऋग्वेदे । ४ । २५ । ४ ।
"तस्मा अग्निर्भारतः शर्म्म यंसत् ।"
"शर्म्म सुखम् ।" इति तद्भाष्ये सायणः ॥ यथाच कथासरित्सागरे । ७८ । ४६ ।
"स्वामिभक्तस्तदेतस्य शर्म्मोपायमिमं शृणु ॥")
तद्वति, त्रि ॥ गृहम् । इति निघण्टुः । ३ । ४ ॥ यथाच ऋग्वेदे । ३ । १३ । ४ ।
"स नः शर्म्माणि वीतयेऽग्निर्यच्छतु शन्तमा ।"
"शर्म्माणि शर्म्मशब्दो गृहवाची छाया शर्म्मेति तन्नामसु पाठात् ।" इति तद्भाष्ये सायणः ॥)

शर्म्मा, [ न् ] पुं, ( शृणात्यशुभमिति । शृ + "सर्व्वधातुभ्यो मनिन् ।" उणा० ४ । १४४ । इति मनिन् । ) ब्राह्मणस्योपाधिविशेषः । यथा,—
"शर्म्मश्राद्धादिके कार्य्ये शर्म्मा तर्पणकर्म्मणि ।
शर्म्मणोऽव्ययकाले च पितॄणां दत्तमक्षयम् ॥"
शर्म्मन्नित्यनेन गोत्रसम्बन्धनामानि पितॄणां परिकल्पयन्नित्येकवाक्यतया ब्राह्मणानां नाम प्रतीयते । तथा च विष्णुपुराणम् ।
"ततश्च नाम कुर्व्वीत पितैव दशमेऽहनि ।
देवपूर्व्वं नराख्यं हि शर्म्मवर्म्मादिसंयुतम् ॥"
देवात् पूर्व्वं नराख्यं नरनाम तच्च विप्रादौ शर्म्मयुतम् । एतच्च विप्रपरम् ।
"शर्म्मा देवश्च विप्रस्य वर्म्म त्राता च भूभुजः ।
भूतिर्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ॥"
इति यमवचनात् ॥
अत्र चकारेण देवशर्म्मणोः समुच्चयः । अत्रापि शर्म्मादान्ततामाह शातातपः ॥
"शर्म्मान्तं ब्राह्मणस्य स्याद्वर्म्मान्तं क्षत्रियस्य च ।
धनान्तञ्चैव वैश्यस्य दासान्तं चान्त्यजन्मनः ॥"
इति श्राद्धतत्त्वम् ॥
( तथा च विष्णुपुराणे । ३ । १० । ८—९ ।
"ततश्च नाम कुर्व्वीत पितैव दशमेऽहनि ;
देवपूर्व्वं नराख्यं हि शर्म्मवर्म्मादिसंयुतम् ॥
शर्म्मेति ब्राह्मणस्योक्तं वर्म्मेति क्षत्रसंश्रयम् ।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥"
"दशमेऽहनि अतीते इति शेषः । तच्चाशौचान्तोपलक्षणम् । अत्रैव कालान्तरमप्याह । यथा,—
'नामधेयं दशम्याञ्च केचिदिच्छन्ति पार्थिव ।
द्वादश्यामथवा रात्र्यां मासे पूर्णे तथापरे ॥'
इति ॥
देवपूर्व्वं कुलदेवतानामपूर्व्वकं कुलदेवतासम्बन्धं नाम कुर्य्यात् इति शङ्खोक्तेः । नराख्यं पुरुषवाचकम् । तच्च प्राप्तं शर्म्मवर्म्मादिसंयुतम् । यथा, सोमशर्म्मा इन्द्रवर्म्मा चन्द्रवर्म्मा चन्द्रगुप्तः शिवदासः इत्यादि ।" इति तट्टीकायां स्वामी ॥
"तत्रादौ नाम निर्णयः ।
'शर्म्मेति ब्राह्मणस्योक्तं वर्म्मेति क्षत्रसंश्रयम् ।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥'
इत्यत्रेति पदस्वरसेन यद्यपि शर्म्मपदात्मकमेव नामावगम्यते तथापि तावन्मात्रं न नाम किन्तु तद्युक्तमिति निर्णीयते द्व्यक्षरं चतुरक्षरं इत्यादि शङ्खदर्शनात् । एवञ्च हरिशर्म्मा नारायणशर्म्मेत्यादि सिध्यति शर्म्मपदमात्रात्मकत्वात् तन्नाम्नश्चतुरक्षरता न स्यादेव । तथाच नारायणादिपदशर्म्मपदाभ्यां निर्णीतमेव नाम दाशरथ्यादिकन्तु शर्म्मपूर्व्वप्रतीकमात्रमेव अतएव दानादौ नामोच्चारणे चैत्रशर्म्मणे इत्येव श्रूयते । गोभिलः ।
'शर्म्मश्राद्धादिके कार्य्ये शर्म्मा तर्पणकर्म्मणि ।
शर्म्मणोऽव्ययकाले स्यादेवं कुर्व्वन् सुखाति ।'
इदमप्युत्तरप्रतीकमात्रपरमुक्तयुक्तेन सङ्केतमूलत्वात् । एतेन शर्म्म सुखमनीयमिति कर्कदर्शनात् । शर्म्मपदमर्थपरं तेन शुभङ्करेत्यादीव नामेत्यपास्तं गोभिलविरोधात् । कर्कस्तु पूर्व्वप्रतीकमात्रपरम् । तेन शुभङ्करशर्म्मा भीमशर्म्मेत्यादि सिध्यति एवञ्च यथकत्वे चैतादृशमेव नाम तेषां प्रयोज्यम् । अपवादकाभावादिति । अत्रैव मनुः ।
'मङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥
शर्म्मवद्ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् ।
स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम् ।
मङ्गल्यं दीर्घवर्णान्तमाशीर्व्वादाभिधानवत् ॥'
शर्म्मवर्म्मप्रभृतीनि उत्तरपदानि कार्य्याणीति मनुटीकापि । स्त्रीनाम तु यशोदादेवीत्यादि स्त्रीणां दान्तमित्यपि पूर्व्वप्रतीकमात्रपरम् ॥ वैश्यस्य गुप्तान्तमिति तु पराशरः । एवञ्च दानादौ चैत्रशर्म्मणे ब्राह्मणायेत्यादि स्वरूपं वाक्यम् ॥" इति द्वैतनिर्णयः ॥ * ॥ )

शर्म्मरः, पुं, वस्त्रभेदः । इति धरणिः ॥

शर्म्मरा, स्त्री, दारुहरिद्रा । इति धरणिः ॥

शर्य्या, स्त्री, रात्रिः । यथा,—
"त्रियामा शर्व्वरी शर्य्या क्षयिणी क्षणदा क्षपा ।"
इति भरतधृतवाचस्पतिः ॥
( इषुः । यथा, ऋग्वेदे । १ । १४ । ४ ।
"शर्य्यामसना मनुदन् ।" "शर्य्या इषवः शरमय्यः । इति यास्कः ॥" इति तद्भाष्ये सायणः ॥
अङ्गुलिः । यथा, तत्रैव । ९ । ११० । ५ ।
"शर्य्याभिर्नभरमाणो गभस्त्योः ।"
"शर्य्याभिरङ्गुलीभिः ।" इति तद्भाष्ये सायणः ॥)

शर्य्यातिः, पुं, वैवस्वतमनुपुत्त्रः । तस्य पुत्त्र आनर्त्तः । यथा,—
"आनर्त्तो नाम शर्य्यातेः सुकन्या नाम दारिका ।
आनर्त्तस्याभवत् पुत्त्रो रोचमानः प्रतापवान् ।
आनर्त्तो नाम देशोऽभून्नगरी च कुशस्थली ॥"
इति मात्स्ये १२ अध्यायः ॥
( अस्य विशेषविवरणं भागवते । ८ । १३ । एवं ९ । १ । अध्याये च द्रष्टव्यम् ॥ )

शर्व्व, हिंसे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) शर्व्वति । इति दुर्गादासः ॥

शर्व्वः, पुं, ( शृणाति सर्व्वाः प्रजाः संहरति प्रलये संहारयति वा भक्तानां पापानि । शॄ + "कॄगॄशॄदॄभ्यो वः ।" उणा० १।१५५। इति वः ।) शिवः । इति हेमचन्द्रः ॥ ( यथा, रघुवंशे । ११ । ९३ ।
"कतिचिदवनिपालः शर्व्वरीः शर्व्वकल्पः ॥" )
इन्द्रयसादिरप्ययम् । विष्णुः । यथा,—
"शर्व्वः सर्व्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ।"
इति तस्य सहस्रनामस्तोत्रम् ॥

शर्व्वरं, क्ली, तमः । कन्दर्पः । इति संक्षिप्तसारोणादिवृत्तिः ॥

शर्व्वरी, स्त्री, ( शृणाति चेष्टामिति शॄ + "कृशॄशॄभ्यः ष्वरच् ।" उणा० २ । १२१ । इति ष्वरच् । षित्वात् ङीष् ।) रात्रिः । इत्यमरः ॥ ( यथा, ऋग्वेदे । ५ । ५२ । ३ ।
"अतिस्कन्दन्ति शर्व्वरीः ॥")
योषित् । इति मेदिनी ॥ हरिद्रा । इति विश्वः ॥ सन्ध्या । इति संक्षिप्तसारोणादिवृत्तिः ॥

शर्व्वला, स्त्री, तोमराख्यम् । इत्यमरटीकायां रायमुकुटः ॥ इन्द्रयसादिरप्ययम् ॥

शर्व्वाणी, स्त्री, ( शर्व्वस्य भार्य्या । "इन्द्रवरुण-भवेति ।" ४।१।४९ । इति ङीष् । ) पार्व्वती ।

इति हेमचन्द्रः ॥ (यथा, कथासरित्सागरे । १ । ५८ ।
"निपत्य पादयोस्ताभ्यां जयया सह बोधिता ।
शापान्तं प्रति शर्व्वाणी शनैर्व्वचनमब्रवीत् ॥")
दन्त्यसादिरप्ययं शब्दः ॥

शर्शरीकः, पुं, (शॄ + "शॄपॄभ्यां ईकक् चाभ्यासस्य ।" उणा० ४।१६। इति ईकन् द्वित्वमभ्यासस्य रुक् च ।) हिंस्रः । खलः । इत्युणादिकोषः ॥ अश्वः । मङ्गलाभरणम् । अग्निः । इति संक्षिप्तसारोणादिवृत्तिः ॥

शल, वेगे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) शलति । इति दुर्गादासः ॥

शल, क ङ श्लाघे । इति कविकल्पद्रुमः ॥ (चुरा०-आत्म०-सक०-सेट् ।) क ङ, शालयते पण्डितं धीरः । इति दुर्गादासः ॥

शल, ङ चलने । सृतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सक० च-सेट् ।) ङ, शलते । चलनं कम्पः । सृतिरिह संवरणम् । इति दुर्गादासः ॥

शल, ञ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) ञ, शालः शलः । इति दुर्गादासः ॥

शलं, क्ली, (शल + "ज्वलितिकसन्तेभ्यो णः ।" ३ । १ । १४० । इति णः ।) शल्यकीलोम । सजारु-काँटा इति भाषा । तत्पर्य्यायः । शललो २ शललम् ३ । इत्यमरः ॥

शलः, पुं, शललम् । भृङ्गी । चैत्रभेदः । ब्रह्मा । इति मेदिनीशब्दरत्नावल्यौ ॥ कुन्ताख्यम् । इति त्रिकाण्डशेषः ॥ उष्ट्रः । इति हेमचन्द्रः ॥ (वासुकिवंशीयसर्पविशेषः । यथा, महाभारते । १ । ५७ । ५ ।
"कोटिशो मानसः पूर्णः शलः पालो हलीमकः ॥"
शन्तनुराजपुत्रः । यथा, भागवते ।९।२२।१८।
"शलश्च शन्तनोरासीत् गङ्गायां भीष्म आत्मवान् ।"
शल्यराजः । यथा, भागवते । १ । १५ । १६ ।
"नृत्रिगर्त्तशलसैन्धववाह्लिकाद्यैः ॥"
कंसामात्यः । यथा, तत्रैव । १० । ३६ । २१ ।
"ततो मुष्टिकचाणूरशलतोशलकादिकान् ॥")

शलकः, पुं, मर्कटः । इति त्रिकाण्डशेषः ॥ माकड़सा इति भाषा ॥

शलङ्गः, पुं, लोकपालः । लवणविशेषः । इत्युणादिकोषः ॥

शलभः, पुं, (शल + "कृशृशलिकलिगर्द्दिभ्योऽभच् ।" उणा० ३ । १२२ । इति अभच् ।) कीटविशेषः । फड़िं इति पङ्गपाल इति च भाषा । तत्पर्य्यायः । पतङ्गः २ । इत्यमरः ॥ पत्राङ्गः ३ पत्राङ्कः ४ । इति शब्दरत्नावली ॥ स तु ईतिविशेषः । यथा,—
"अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः ।
प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः ॥"
इति ज्योतिस्तत्त्वम् ॥
(असुरविशेषः । यथा, हरिवंशे । ३ । ८८ ।
"शरभः शलभश्चैव विप्रचित्तिश्च वीर्य्यवान् ॥")

शललं, क्ली, (शल चलनसंवरणयोः + वृषादित्वात् कलः ।) शलम् । इत्यमरः ॥

शलली, स्त्री, (शलल + गौरादित्वाज्जातित्वाद्वा ङीष् ।) शलम् । इत्यमरः ॥ शली । इति राजनिर्घण्टः ॥

शलाका, स्त्री, (शल + "बलाकादयश्च ।" उणा० ४।१४ । इति आकः । स्त्रियां टाप् ।) शल्यम् । मदनवृक्षः । शारिका । शल्लकी । छत्रादिकाष्ठी । (यथा, गुरुगीतायाम् ।
"अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥")
शरः । इति मेदिनी ॥ आलेख्यकूर्च्चिका । इति हेमचन्द्रः ॥ अस्थि । इति शब्दचन्द्रिका ॥

शलाकापरि, व्य, शलाकाक्रीड़ायां पराजयः । यथा । "अक्षशलाकासंख्याः परिणा ।" २।१।१० । द्यूतव्यवहारे पराजये एवायं समासः । अन्ये विपरीतं वृत्तम् । अक्षपरि । एवं शलाकापरि । एकपरि । इति सिद्धान्तकौमुदी ॥ अपि च । नन्वेकस्याक्षस्य शलाकाया वा द्यूतेऽन्यथापातनमित्यर्थे अक्षपरि शलाकापरि इत्यव्ययीभावेऽव्याप्तिस्तयोरव्ययगर्भत्वेऽपि अव्ययपूर्व्वत्वाभावात् । इति शब्दशक्तिप्रकाशिका ॥

शलाकापुरुषाः, पुं, बौद्धानां त्रिषष्टिदेवपुरुषाः । तत्र द्वादश चक्रवर्त्तिनः । चतुर्व्विंशतिर्जिनाः । नव वासुदेवाः । नव बलदेवाः । नव प्रतिवासुदेवाश्च । यथा,—
"यः सर्व्वमण्डलस्येशो राजसूयञ्च योऽयजत् ।
चक्रवर्त्ती सार्व्वभौमस्ते तु द्वादश भारते ॥
आर्षभिर्भरतस्तत्र सगरस्तु सुमित्रभूः ।
मघवा वैजयिरथाश्वसेननृपनन्दनः ॥
सनत्कुमारोऽथ शान्तिकुन्थुररोजिना अपि ।
शुभूमस्तु कार्त्तवीर्य्यः पद्मः पद्मोत्तरात्मजः ॥
हरिषेणो हरिसुतो जयो विजयनन्दनः ।
ब्रह्मसूनुर्ब्रह्मदत्तः सर्व्वे चेक्ष्वाकुवंशजाः ॥
प्राजापत्यस्त्रिपृष्ठोऽथ द्विपृष्ठो ब्रह्मसम्भवः ।
स्वयम्भू रुद्रतनयः सोमभूः पुरुषोत्तमः ॥
शैविः पुरुषसिंहोऽथ महाशीरः समुद्रवः ।
स्यात् पुरुषपुण्डरीको दत्तोऽग्निः सिंहनन्दनः ॥
नारायणो दाशरथिः कृष्णस्तु वसुदेवभूः ।
वासुदेवा अमी कृष्णा नव शुक्ला बलास्त्वमी ॥
अचलो विजयो भद्रः सुप्रभश्च सुदर्शनः ।
आनन्दो नन्दनः पद्मो रामो विष्णुद्विषस्त्वमी ॥
अश्वग्रीवस्तारकश्च मेरको मधुरेव च ।
निशुम्भबलिप्रह्लादलङ्केशमगधेश्वराः ।
जिनः सह त्रिषष्टिः स्युः शलाकापुरुषा अमी ॥"
इति हेमचन्द्रः ॥

शलाटः, पुं, शकटपरिमाणम् । यथा,—
"तुलापलशतं तासां विंशत्या भार आचितः ।
शकटः शाकटीनश्च शलाटश्च दशाचितः ॥"
इति हेमचन्द्रः ॥

शलाटुः, त्रि, अपक्वफलम् । इत्यमरः ।२।४।१५॥ (यथा, सुश्रुते । १ । ४३ ।
"मदनशलाटु चूर्णान्येवं वा बकुलरन्धकोपयुक्तानि मधुलवणयुक्तानीति ॥")

शलाटुः, पुं, मूलविशेषः । इत्युणादिकोषः ॥ बिल्वः । इति राजनिर्घण्टः ॥

शलाभोलिः, पुं, उष्ट्रः । इति हेमचन्द्रः ॥

शलालु, क्ली, सुगन्धिद्रव्यविशेषः । इति सिद्धान्तकौमुदी ॥

शलालुकः, त्रि, शलालुना क्रीतं वस्तु । यथा । "शलालुनोऽन्यतरस्याम् ।" ४ । ४ । ५४ । इति पक्षे ठक् । शलालुकः । शलालुकी । शालालुकः । शालालुकी । शलालु सुगन्धिद्रव्यविशेषः । इति सिद्धान्तकौमुदी ॥

शली, स्त्री, (शलं शल्यकीलोम अस्त्यस्या इति । शल + अच् । ङीष् ।) स्वल्पशल्यकः । तत्पर्य्यायः । शलली २ श्वावित् ३ । अस्य मांसगुणाः । गुरुत्वम् । स्निग्धत्वम् । शीतलत्वम् । कफपित्तनाशित्वञ्च । इति राजनिर्घण्टः ॥

शल्कं, क्ली, (शल चलने सृतौ + "इण्भीकापाशल्यतिमर्च्चिभ्यः कन् ।" उणा० ३ । ४३ । इति कन् ।) खण्डम् । वल्कलम् । इत्यमरः ॥ मत्स्यत्वक् । आँइस इति भाषा । यथा,—
"शल्कं स्यात् वल्कले खण्डे शल्कन्तु मत्स्यवल्कले ॥"
इति भरतधृतकोषः ॥
(यथा, महाभारते । १२ । ३६ । २३ ।
"अभक्ष्या ब्राह्मणैर्मत्स्याः शल्कैर्ये वै विवर्जिताः ॥")

शल्कलं, क्ली, मत्स्यवल्कलम् । वृक्षत्वक् । शलधातोः कलच्प्रत्ययेन निष्पन्नमेतत् । इति सिद्धान्तकौमुदी ॥

शल्कली, [न्] पुं, (शल्कलमस्यास्तीति । शल्कल + इनिः ।) मत्स्यः । इति शब्दरत्नावली ॥

शल्की, [न्] पुं, (शल्कमस्यास्तीति । शल्क + इनिः ।) मत्स्यः । इति हेमचन्द्रः ॥

शल्पदा, शल्पपर्णिका, } स्त्री, मेदा । इति राजनिर्घण्टः ॥

शल्भ, ङ कत्थने । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् ।) ङ, शल्भते । कत्थनं प्रशंसा । इति दुर्गादासः ॥

शल्मलिः, पुं, शाल्मलीवृक्षः । (यथा, वाजसनेयसंहितायाम् । २३ । १३ । "शाल्मलिर्वृद्ध्या ।" "शाल्मलिर्वृक्षविशेषो वृद्ध्या त्वामवतु शल्मलिर्वनस्पतीनां वर्षिष्ठं वर्द्धत इति श्रुतेः ।" इति तद्भाष्यम् ।)

शल्मली, स्त्री, शाल्मलिवृक्षः । यथा,—
"शल्मलिः स्यात् शाल्मलिश्च शाल्मली शल्मली तथा ॥"
इति भरतद्विरूपकोषः ॥

शल्यं, क्ली, (शलति चलतीति । शल + "सानसिवर्णसिपर्णसीति ।" उणा० ४ । १०७ । इति

नः ।) भूपृष्ठः । रघुः । (यथा, रघुः ।
९ । ७५ ।

"शल्यप्रोतं प्रेक्ष्य सकुम्भं मुनिपुत्त्रं
तापादन्तःशल्य इवासीत् क्षितिपोऽपि ॥")

तोमरम् । इति मेदिनी ॥ वंशशलाका । इति
विश्वः ॥ दुःखम् । दुर्वाक्यम् । इति शब्द-
रत्नावली ॥ पापम् । इति त्रिकाण्डशेषः ॥
अस्थि । यथा । अथ शल्योद्धारविधिः ।

"सुनिश्चितां मन्दिरभूमिमादौ
निखाय तोयावधि यत्नतस्ताम् ।
कुर्य्याद्विशल्यामथवा नृमानं
खात्वाथवा प्रश्नवशाद्विधिज्ञः ॥
दूर्व्वाप्रवालाक्षतपुष्पपाणिः
शुचिः शुचिं दैवविदं समेत्य ।
पृच्छेद्विनीतो मधुरस्वरेण
शल्यस्य तत्त्वं भवने तदीशः ॥

ततः प्रश्नादिमो वर्णः सन्धार्य्यो यत्नतोऽथवा ।
क्रमात् पुष्पापणादेव फलानां नामवादिनः ॥
प्रणवो धरणी धारिणी करी च तदनन्तरम् ।
न भूत्यै मम इत्येव मन्त्रो वह्निप्रियान्तकः ॥"
वह्निप्रिया स्वाहा ।
"मन्त्रेणानेन कठिनीमभिमन्त्र्य विभाजयेत् ।
नवधा सदनक्षेत्रं तथा पञ्चादिवेखयेत् ॥
अ-क-च-ट-ए-हाः श-प षा नव चेत् प्रश्ना-
क्षराणि जायन्ते ।
प्रागादिकोष्ठे नवके वर्णास्ते शल्यमाख्यान्ति ॥

प्रश्ने अकारः पुरतो नरास्थि
ब्रवीति शल्यं मरकप्रदायि ।
चौर्य्याग्निदण्डोरगहेतुमृत्यु-
प्रदं ककारः खरशल्यमग्नौ ॥
याम्यां चकारः श्वगास्थि वेश्म
प्रभोर्विनाशं प्रकरोति शल्यम् ।
रक्षोदिशि च्यास्थिगृहस्थितानां
मह्द्भयं वक्ति सुनिश्चितं तः ॥
एः पश्चिमेऽस्थि शिशोर्ब्रवीति
मृत्युं प्रवासादगृहमेव शल्यम् ।
हो वायुकोणे नरकूपमस्थि
दारिद्र्यमित्रक्षयकृद्विधत्ते ॥"

धनपदिशि शकारः प्राह विप्रास्थि वित्त-
क्षयकृदथ पकारो वक्ति रुग्चास्थि शम्भौ ।
तदिह कुलविनाशं गोधनानाञ्च हानिं
वितरति गृहनाथस्यापि शुभस्य देवैः ॥

यो मध्यभागे भवितं कपालं
कालायसं चाह कुलक्षयाय ।
यत्नादपास्यान्यधना प्रमाणं
सर्व्वेन तथ्यं कथयामि शल्ये ॥

इन्द्रयोजयेशाने शल्यं साहङ्करे कटौ ।
वह्न्यन्तककुवेरेषु पुरुषे मध्यवातयोः ॥"
देवीपुराणम् ।
"पुरुषाधःस्थितं शल्यं न गृहे दोषदं भवेत् ।
प्रासादे दोषदं शल्यं भवेद्यावज्जलान्तकम् ॥
गृहारम्भेऽतिकण्डूतिः स्वाम्यङ्गे यदि जायते ।
शल्यं त्वपनयेत्तत्र प्रासादे भवनेऽपि वा ॥"
इति ज्योतिस्तत्त्वम् ॥ * ॥

सप्त शल्यानि यथा,—
"नृपो न हरिसेवको व्ययधनो न लब्धार्पकः
कविर्न सुरजित् कविः श्रुतगुरुर्न सद्वैष्णवः ।
गुणी न भगवत्परो रसिकधीर्न लब्धाश्रयः
स न व्रजजनानुगो जगति सप्त शल्यानि च ॥"
इति पाद्मोत्तरखण्डे १०० अध्यायः ॥

शल्यः, पुं, (शल गतौ + यः ।) मदनवृक्षः ।
श्वावित् । इत्यमरः ॥ (यथा, भागवते । ८।२।२२।
"वृका वराहा महिषर्क्षशल्या
गोपुच्छशालावृकमर्कटाश्च ।")
नृपभेदः । स तु युधिष्ठिरमातुलः । (अयं हि
दुर्य्योधनेन कापट्यात् वशीकृतः कुरुपाण्डवयुद्धे
दुर्य्योधनपक्षं समाश्रयत् । यथा, महाभारते ।
१ । २ । २१६ ।
"मद्रराजश्च राजानमायान्तं पाण्डवान् प्रति ।
उपहारैर्वञ्चयित्वा वर्त्मन्येव सुयोधनः ॥
वरदं तं वरं वव्रे साहाय्यं क्रियतां मम ।
शल्यस्तस्मै प्रतिश्रुत्य जगामोद्दिश्य पाण्डवान् ॥"
कर्णार्ज्जुनयोर्द्वैरथयुद्धे शल्यस्य कर्णतेजो भङ्ग-
करणे प्रतिज्ञा । यथा, तत्रैव । ५ । ८।३७-४५।
युधिष्ठिर उवाच ।
"सुकृतं ते कृतं राजन् ! प्रहृष्टेनान्तरात्मना ।
दुर्य्योधनस्य यद्वीर त्वया वाचा प्रतिश्रुतम् ॥
एकं त्विच्छामि भद्रन्ते क्रियमाणं महीपते ।
राजन्नकर्त्तव्यमपि कर्त्तुमर्हसि मातुल ॥
मम त्ववेक्षया वीर शृणु विज्ञापयामि ते ।
भवानिह महाराज वासुदेवसमो युधि ॥
कर्णार्ज्जुनाभ्यां संप्राप्ते द्वैरथे राजसत्तम ।
कर्णस्य भवता कार्य्यं सारथ्यं नात्र संशयः ॥
तत्र पाल्योऽर्ज्जुनो राजन् यदि मत्प्रियमिच्छसि ।
तेजोवधश्च ते कार्य्यः सौतेरस्मज्जयावहः ।
अकर्त्तव्यमपि ह्येतत् कर्त्तुमर्हसि मातुल ॥
शल्य उवाच ।
शृणु पाण्डव भद्रं ते यद्ब्रवीषि दुरात्मनः ।
तेजोवधनिमित्तं मां सूतपुत्त्रस्य संयुगे ॥
अहं तस्य भविष्यामि संग्रामे सारथिर्ध्रुवम् ।
वासुदेवेन हि समं नित्यं मां स हि मन्यते ॥
तस्याहं कुरुशार्दूल प्रतीपमहितं वचः ।
ध्रुवं सङ्कथयिष्यामि योद्धुकामस्य संयुगे ॥
यथा च हृतदर्पश्च हृततेजाश्च पाण्डव ।
भविष्यति सुखं हन्तुं सत्यमेतद्ब्रवीमि ते ॥"
युधिष्ठिरस्तु एनं हतवान् । एतद्वृत्तान्तस्तु
महाभारते शल्यपर्व्वणि १७ अध्याये द्रष्टव्यः ॥)
सीमा । शलाका । इति हेमचन्द्रः ॥ बिल्व-
वृक्षः । मत्स्यभेदः । इति राजनिर्घण्टः ॥ *
शल्यनिःसरणौषधं यथा,—
"इन्द्र लाङ्गलिकामूलं छिन्नसस्य तथैव च ।
तेन प्रयासुखं लिप्तं शल्यो निःसरति व्रणात् ।
चिरकालप्रविष्टोऽपि तेन मार्गेण शङ्कर ॥"
इति गारुडे १९३ अध्यायः ॥

शल्यः, पुं, स्त्री, शस्त्रविशेषः । शेल इति भाषा ।
तत्पर्य्यायः । शङ्कुः २ । इत्यमरः ॥ दीर्घायुधः
३ शलः ४ कुन्तः ५ विषाङ्कुरः ६ । इति
त्रिकाण्डशेषः ॥

शल्यकः, पुं, (शल्य इव । शल्य + इवार्थे कन् ।)
मदनवृक्षः । इति शब्दरत्नावली ॥ शल्लकी-
जन्तुः । इति राजनिर्घण्टः ॥ (यथा, मनुः ।
४ । १८ ।
"श्वाविधं शल्यकं गोधां खड्गकूर्म्मशशांस्तथा ।
भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः ॥")

शल्यकण्ठः, पुं, (शल्यं नखलोम कण्ठेऽपि यस्य ।)
शल्लकी । इति शब्दचन्द्रिका ॥

शल्यलोम, [न्] क्ली, (शल्यवत् लोम ।) शललौ ।
इति राजनिर्घण्टः ॥

शल्यारिः, पुं, (शल्यस्य अरिस्तन्नाशकत्वात् ।)
युधिष्ठिरराजः । इति हेमचन्द्रः ॥

शल्ल, गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) शल्लकी । इति दुर्गादासः ॥
सौत्रधातुरयम् ॥

शल्लं, क्ली, त्वक् । इति शब्दरत्नावली ॥

शल्लः, पुं, भेकः । इति शब्दरत्नावली ॥

शल्लकं, क्ली, (शल्लमेव । स्वार्थे कन् ।) त्वक् । इति
शब्दरत्नावली ॥

शल्लकः, पुं, शोणवृक्षः । इति जटाधरः ॥
(शल्लकीजन्तुः । यथा, याज्ञवल्क्ये । १ ।
१७७ ।
"भक्ष्याः पञ्चनखाः सेधा गोधाकच्छपशल्लकाः ।
शशाश्च मत्स्येष्वपि हि सिंहतुण्डकरोहिताः ॥")

शल्लकी, स्त्री, पशुविशेषः । शजारु इति वङ्ग-
भाषा । साहिल इति हिन्दीभाषा ॥ तत्-
पर्य्यायः । श्वावित् २ शलका ३ शल्यः ४ ।
इति जटाधरः ॥ क्रकचपादः ५ छेदारः ६ ।
इति शब्दरत्नावली ॥ शल्यकः ७ शल्यमृगः ८
वज्रशल्यः ९ विलेशयः १० । अस्या मांस-
गुणाः ।
"शल्यमांसं गुरु स्निग्धं शीतलं कफपित्तजित् ॥"
इति राजनिर्घण्टः ॥
भावप्रकाशोक्तगुणाः श्वेशयशब्दे द्रष्टव्याः ॥
वृक्षविशेषः । (यथा, रामायणे । २ । ५५ । ९ ।
"क्रोशमात्रं ततो गत्वा नीलं प्रेक्ष्य च काननम् ।
शल्लकीवदरीमिश्रं राम वन्यैश्च यामुनैः ।
स पन्थाश्चित्रकूटस्य गतस्य बहुशो मया ॥")
तत्पर्य्यायः । गजभक्ष्या २ सुवहा ३ सुरभिः ४
रसा ५ महेरणा ६ कुन्दुरुकी ७ ह्लादिनी ८ ।
इत्यमरः ॥ गजभक्षा ९ सुरभी १० महेरुणा ११
महारणा १२ ह्लादिनी १३ शिल्लकी १४
सल्लकी १५ । इति भरतः ॥ सुरभीरसा १६
श्लक्ष्णकी १७ । इति टीकान्तरम् ॥ शिल्ककी १८
शिल्कभूमिका १९ । इति शब्दरत्नावली ॥ अश्व-
मूत्री २० कुन्ती २१ । इति जटाधरः ॥

शल्लकीद्रवः, पुं, सिह्लकः । इति जटाधरः ॥

शल्वः, पुं, शाल्वदेशः । इत्युणादिकोषः ॥

शव, विकारे। गतौ। इति कविकल्पद्रुम: ॥ (भ्वा०-पर०-सक०-सेट्।) शवति चित्तं काम:। इति दुर्गादास: ॥

शवं, क्ली, ( शवति गच्छतीति। शव+अच्।) जलम्। इति मेदिनी ॥

शव:, पुं, क्ली, ( शवति दर्शनेन चित्तं विकरोतीति। शव विकारे+अच्।) मृतशरीरम्। तत्पर्य्याय:। कुणप: २। इत्यमर: ॥ चितिवर्द्धन: ३। इति शब्दरत्नावली ॥ मृतकम् ४। इति वराहपुराणम् ॥ *॥ तद्दाहविधिर्यथा,—

"नष्टसंज्ञं समुद्दिश्य ज्ञात्वा मृत्युवशं गतम्।
महावनस्पतिं गत्वा गन्धांश्च विविधानपि ॥
घृततैलसमायुक्तं कृत्वा वै देहशोधनम्।
तेनो यपकारं चास्य तत् सर्व्वं परिकल्प्य च ॥
दक्षिणायां शिर: कृत्वा सलिले तं निधाय च।
तीर्थाद्यावाहनं कृत्वा स्नापनं तस्य कारयेत् ॥
गयादीनि च तीर्थानि ये च पुण्या: शिलोच्चया:।
कुरुक्षेत्रञ्च गङ्गा च यमुना च सरिद्वरा ॥
कौशिकी च पयोष्णी च सर्व्वपापप्रणाशिनी।
गण्डकी भद्रनामा च सरयूर्बलदा तथा ॥
वनानि नव वाराहं तीर्थं पिण्डारकं तथा।
पृथिव्यां यानि तीर्थानि चत्वार: सागरास्तथा ॥
सर्व्वाणि मनसा ध्यात्वा स्नानमेवन्तु कारयेत्।
श्मशानन्तन्तु तं नीत्वा चितां कृत्वा विधानत: ॥
तस्या उपरि तं स्थाप्य दक्षिणाग्रं शिरस्तथा।
देवानभिमुखान् ध्यात्वा गृह्य हस्ते हुताशनम् ॥
प्रज्वाल्य विधिवत्तत्र मन्त्रमेतदुदीरयेत्।
कृत्वा सुदुष्करं कर्म्म जानता वाप्यजानता ॥
मृत्युकालवशं प्राप्य नर: पञ्चत्वमागत:।
धर्म्माधर्म्मसमायुक्तो लोभमोहसमावृत: ॥
दह एतस्य गात्राणि देवलोकाय गच्छतु।
एवमुक्त्वा तत: शीघ्रं कृत्वा चैव प्रदक्षिणम् ॥
ज्वलमानं तदा वह्निं शिर:स्थाने प्रदापयेत्।
चातुर्व्वर्ण्येषु संस्कारमेवं भवति पुत्रक।
गात्राणि वाससी चैव प्रक्षाल्य विनिवर्त्तयेत् ॥
मृतनाम समुद्दिश्य दद्यात् पिण्डं महीतले।
तदाप्रभृति चाशौचं देवकर्म्म न कारयेत् ॥"

इति वाराहे श्राद्धोत्पत्तिनामाध्याय: ॥

अस्यत् दाहशब्दे द्रष्टव्यम् ॥ *॥ तस्य स्पर्शे दोषो यथा,—

वाराह उवाच।

"स्पृष्ट्वा तु मृतकं भद्रे नरं पञ्चत्वमागतम्।
मम शास्त्रं बहि: कृत्वा य: श्मशानं प्रपद्यते ॥
पितरस्तस्य सुश्रोणि आत्मानश्च पितामहा:।
श्मशाने जम्बुका भूत्वा भक्षयन्त: शवांस्तथा ॥
ततो हरेर्वच: श्रुत्वा कर्म्मकामा वसुन्धरा।
उवाच मधुरं वाक्यं सर्व्वलोकहिताय वै ॥

धरण्युवाच।

तव नाथ प्रपन्नानां क पापं विद्यते प्रभो।
प्रायश्चित्तञ्च मे ब्रूहि येन मुच्यति किल्विषात् ॥

वाराह उवाच।

शृणु सुन्दरि! तत्त्वेन यन्मां त्वं परिपृच्छसि।
कथयिष्यामि ते ह्येतं शोभनं पापनाशनम् ॥
एकाहारं दिनान् सप्त त्रिदिनं चाप्युपोषित:।
पञ्चगव्यं तत: पीत्वा शीघ्रं मुच्यति किल्विषात् ॥
शवे स्पृष्टेऽपराधस्य एष ते कथितो विधि:।
सर्व्वथा वर्जनीयो वै सर्व्वभागवतेन तु ॥
य एतेन विधानेन प्रायश्चित्तं समाचरेत्।
विमुक्त: सर्व्वपापेभ्य: अपराधो न विद्यते ॥"

अपि च।

वराह उवाच।

"स्पृष्ट्वा तु मृतकं देवि! यो मत्क्षेत्रेषु तिष्ठति।
शतं वर्षसहस्राणि गर्भेषु परिवर्त्तते ॥
दश वर्षसहस्राणि चण्डालश्चैव जायते।
अन्ध: सप्तसहस्राणि मण्डूकश्च शतं समा: ॥
मक्षिका त्रीणि वर्षाणि टिट्टिभेकादशं समा:।
दश वै सप्त चान्यानि कृकलासो भवेत् समा: ॥
हस्ती वर्षशतञ्चैव खरो द्वात्रिंशको भवेत्।
मार्ज्जारो नव वर्षाणि वानरो दश पञ्च च ॥
एवं स चात्मदोषेण मम कर्म्मपरायण:।
प्राप्नोति सुमहद्दु:खं देवि! एवं न संशय: ॥
ततो हरेर्वच: श्रुत्वा दु:खेन परिपृच्छति।
सर्व्वसंसारमोक्षाय प्रत्युवाच वसुन्धरा ॥
किमिदं भाषसे देव मानुषाणां दुरासदम्।
वाक्यं भीषणकञ्चैव मम कर्म्मप्रनोदकम् ॥
आचाराच्च परिभ्रष्टस्तव कर्म्मपरायण:।
तरन्ति येन दुर्गाणि प्रायश्चित्तं तथा वद ॥
श्रुत्वा पृथ्व्यास्ततो वाक्यं लोकनाथो जनार्द्दन:।
धर्म्मसंरक्षणार्थाय प्रत्युवाच वसुन्धराम् ॥

वराह उवाच।

स्पृष्ट्वा तु मृतकं भूमे मम कर्म्मपरायण:।
एकाहारं ततस्तिष्ठेत् दिनानि दश पञ्च च ॥
तत एवं विधिं कृत्वा पञ्चगव्यं तु प्राशयेत्।
शुद्धभावं विशुद्धात्मा कर्म्मणा च न लिप्यते ॥
एतत्ते कथितं देवि स्पृष्ट्वा मृतकमेव च।
दोषञ्चैव विबुध्याथ यत्त्वया पूर्व्वपृच्छितम् ॥
य एतेन विधानेन प्रायश्चित्तं समाचरेत्।
अपराधविनिर्मुक्तो मम लोकं स गच्छति ॥"

इति वाराहे मृतदर्शनस्पर्शनप्रायश्चित्तनामाध्याय: ॥ *॥ शवानुगमनाशौचं यथा। कूर्म्मपुराणम्।

"प्रेतीभूतं द्विजं विप्रो योऽनुगच्छति कामत:।
स्नात्वा सचैलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति ॥
एकाहात् क्षत्त्रिये शुद्धिर्वैश्ये च स्यात् द्व्यहेन तु।
शूद्रे दिनत्रयं प्रोक्तं प्राणायामशतं पुन: ॥"

एतच्च घृतप्राशनं शुद्धिहेतुत्वान्नियमपरम्। न तु प्रायश्चित्तवद्भोजनाभावपरम्। तत्र तपस्त्वात्तथा। अनु: सहार्थ:। यत्तु याज्ञवल्क्यवचनम्।

"ब्राह्मणेनानुगन्तव्यो न तु शूद्र: कथञ्चन।
अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाग्निं घृतभुक् शुचि: ॥"

तत्प्रमादादनुगमने कथञ्चनेत्यभिधानात्। अम्भसि न तूद्धृतोदके ॥ *॥ शूद्रस्य ब्राह्मणशववहने दोषो यथा,—

"मृतब्राह्मणदेहांश्च दैवात् शूद्रा वहन्ति चेत्।
पदप्रमाणवर्षञ्च तेषाञ्च नरके स्थिति: ॥
ततस्तेषाञ्च साहाय्यं करोति हरिरूपिणी।
ददाति मुक्तिं तेभ्योऽपि क्रमेण च तपामयी ॥
जन्म पुण्यवतां गेहे कारयित्वा च भारते।
स्थानं ददाति वैकुण्ठे निश्चितं जन्मभिस्त्रिभि: ॥"

इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ४४ अध्याय: ॥

शवदूषितगृहजलाशयादीनां शुद्धिर्यथा,—

ब्रह्मपुराणम्।

"येषामभक्ष्यं मांसञ्च तच्छरीरैर्युतञ्च यत्।
वापीकूपतडागेषु जलं सर्व्वञ्च दुष्यति ॥"

तच्छरीरैर्मृतशरीरै:। उत्तरवचने कुणपग्रहणात्। यथा,—

"सकुणपं सकर्द्दमं तेभ्यस्तोयमपास्य तत्।
प्रक्षिपेत् पञ्चगव्यञ्च समन्त्रं सर्व्वशुद्धिकृत् ॥
अपास्य कुणपं तेभ्यो बहुतोयेभ्य एव वा।
शतं षष्ट्यथवा त्रिंशत् तोयकुम्भान् समुद्धरेत् ॥"

वापी ससोपाना। नि:सोपान: कूप:। तडाग: पद्माकर:। शतादिजलाल्पत्वाद्यपेक्षया अत्यल्पस्य सर्व्वोद्धारणाभिधानात्। एवं मरणसमये गृहान्नि:सार्य्यते अन्यथा गृहस्य दुष्टता स्यात् ॥ यथा, हेहमनु:।

"श्वशूद्रपतितास्त्वान्त्या मृताश्चेद्द्विजमन्दिरे।
शौचं तत्र प्रवक्ष्यामि मनुना भाषितं यथा ॥
दशरात्राच्छुनि प्रेते मासाच्छूद्रे भवेच्छुचि:।
द्वाभ्यान्तु पतिते गेहे अन्त्ये मासचतुष्टयात्।
अत्यन्त्ये वर्ज्जयेद्गेहमित्येवं मनुरब्रवीत् ॥"

द्वाभ्यां मासाभ्यां माससम्बन्धशपाठात्। अन्त्यं म्लेच्छ:। अत्यन्त्य: श्वपाक:। इति वाचस्पतिमिश्रा: ॥ यम:।

"द्विजस्य मरणे वेश्म विशुध्यति दिनत्रयात्।
दिनैकेन बहिर्भूमिरग्निप्रोक्षणलेपनै: ॥" * ॥

यथोक्तकालानन्तरकर्त्तव्यमाह सम्वर्त्त:।

"गृहशुद्धिं प्रवक्ष्यामि अन्तस्थशवदूषिते ॥
प्रोत्सृज्य मृण्मयं पात्रं सिद्धमन्नं तथैव च।
गृहादपास्य तत् सर्व्वं गोमयेनोपलेपयेत् ॥
गोमयेनोपलिप्याथ छागेनाघ्रापयेद्बुध: ॥
ब्राह्मणैर्मन्त्रपूतैश्च हिरण्यकुशवारिभि:।
सर्व्वमभ्युक्षयेद्वेश्म तत: शुध्यत्यसंशय: ॥"

अत्र मन्त्रानादेशे गायत्री। देवल:।

"पञ्चधा वा चतुर्धा वा भूरमेध्या विशुध्यति।
दुष्टा द्विधा त्रिधा वापि शुध्यते मलिनैकधा
दहनं खननं भूमेरुपलेपनवापने।
पर्ज्जन्यवर्षणञ्चापि शौचं पञ्चविधं स्मृतम् ॥
प्रसूते गर्भिणी यत्र म्रियते यत्र मानुष:।
चाण्डालैरुषितं यत्र यत्र विन्यस्यते शव: ॥
विण्मूत्रोपहतं यत्र कुणपो यत्र दृश्यते।

एवं कश्मलभूयिष्ठा भूरमेध्यास्ति कथ्यते ।
कृमिकीटपदक्षेपैर्दूषिता यत्र मेदिनी ।
एषया कर्षणैः क्षिप्ता वान्तैर्वा दूषिता भवेत् ॥
नखदन्ततनूजत्वक्तुषपांशुरजोमलैः ।
भस्मपङ्कतृणैर्वापि प्रच्छन्ना मलिना भवेत् ॥”
वापनं बहुवारेण पूरणम् । ऊषितं वासः ।
एषा घनीभूतश्लेष्मादि । चतुर्ष्वादौ पञ्चानां मध्ये यथासम्भव ग्रहणम् । अङ्गिराः ।
“शोषं सहस्ररोमाणां वाय्वर्केन्दुरश्मिभिः ।
रेतस्पृष्टं शवस्पृष्टमाविकं नैव दुष्यति ॥”
सहस्ररोमाणां कम्बलानाम् । इति शुद्धितत्त्वम् ।

शवकाम्यः, पुं, ( शवः काम्यो यस्य । ) कुक्कुरः । इति शब्दरत्नावली ॥

शवयानं, क्ली, ( शवस्य यानम् । ) शववहनार्थखट्टा । मड़ार खाट इति भाषा । तत्पर्य्यायः । काष्ठमञ्चः २ । इति हारावली ॥ खोटः ३ खाटी ४ खाटिका ५ शवरथः ६ । इति शब्दरत्नावली ॥

शवरः, पुं, ( शव+बाहुलकादरः । यद्वा, शवं राति गृह्णातीति । रा+कः । ) म्लेच्छजातिविशेषः । इत्यमरः ॥ मयूरपुच्छपरिधानो म्लेच्छः किरातः । पत्रपरिधानः शवरः । इति तट्टीकायां भरतः ॥ पानीयम् । शिवः । इति मेदिनी ॥ शास्त्रविशेषः । हस्तः । इत्युणादिकोषः ॥

शवरथः, पुं, ( शवस्य रथः । ) शवयानम् । इति शब्दरत्नावली ॥

शवरलोध्रः, पुं, श्वेतलोध्रः । इति रत्नमाला ॥

शवरालयः, पुं, ( शवरस्यालयः । ) शवरगृहम् । तत्पर्य्यायः । पक्कणः २ । इत्यमरः ॥ पक्काणः ३ । इति शब्दरत्नावली ॥ शवरावासः ४ । इति हेमचन्द्रः ॥

शवरावासः, पुं, ( शवरस्यावासः । ) शवरालयः । इति हेमचन्द्रः ॥

श(ब)वलः, पुं, ( शप आक्रोशे+“शपेर्व्वश्च ।” उणा० १ । १०७ । इति कलः वश्चान्तादेशः । ) कर्व्वुरवर्णः । तद्वति, त्रि । इत्यमरः ॥ ( यथा, भागवते । ३ । २३ । २४ ।
“अङ्गञ्च मलपङ्केन संछन्नं शवलस्तनम् ॥”)

शवला, स्त्री, (शवल+स्त्रियां टाप् । ) शवलवर्णा गौः । इत्यमरभरतौ ॥

शवली, स्त्री, ( शवलयोगादन्यतो ङीष् ।) शवलवर्णा गौः । इत्यमरभरतौ ॥

शवसानः, पुं, पथिकः । इति सिद्धान्तकौमुदी ॥ वैदिकपदोऽयम् । शवधातोरौणादिकसानच्प्रत्ययेन निष्पन्नमेतत् ॥

शश, प्लवने । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् । ) शशौ शशिशुषीः शशशिति किरातयमकात् । शशति भेकः प्लवेन गच्छतीत्यर्थः । ह फल भज इत्यत्र वर्ज्जनमस्यैव । दन्त्यान्तोऽयमपीत्येके । इति दुर्गादासः ॥

शशः, पुं, ( शशति प्लवेन गच्छतीति । शश+अच् ।) मृगविशेषः । इत्यमरः ॥ शशारु इति खरगोश इति च भाषा ॥ (यथा, मनौ ।३।२७० ।
“शशकूर्म्मयोस्तु मांसेन मासानेकादशैव तु ॥”)
अस्य मांसगुणाः । स्वादुत्वम् । कषायत्वम् । मलबद्धकारित्वम् । शीतत्वम् । लघुत्वम् । शोषातीसारपित्तरक्तनाशत्वम् । रूक्षत्वञ्च । इति राजवल्लभः । अपि च ।
“शशमांसं त्रिदोषघ्नं दीपनं श्वासकासनुत् ॥”
इति राजनिर्घण्टः ॥
अन्यच्च ।
“शशः स्थूली लोमकर्णो विलेशयः प्रकीर्त्तितः ।
शशः शीतो लघुर्ग्राही रूक्षः स्वादुः सदा हितः ॥
वह्निकृत् कफपित्तघ्नो वातसाधारणः स्मृतः ।
ज्वरातीसारशोषास्रश्वासामयहरश्च सः ॥”
इति भावप्रकाशः ॥
श्राद्धेऽस्य मांसस्य दानफलं यथा,—
“हविष्यान्नेन वै मासं पायसेन च वत्सरम् ।
मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ।
मासवृद्ध्याभितृप्यन्ति दत्तेनेह पितामहाः ॥”
इति श्राद्धतत्त्वम् ॥
विष्णवे एतन्मांसस्य देयत्वं यथा,—
“मार्गं मांसं तथा च्छागं शाशं समनुयुज्यते ।
एतानि हि प्रियाणि स्युः प्रयोज्यानि वसुन्धरे ॥”
इत्येकादशीतत्त्वम् ॥
चन्द्रलाञ्छनः । इति धरणिः ॥ बोलः । लोध्रः । मनुष्यविशेषः । इति मेदिनी ॥ स तु चतुर्व्विधपुरुषान्तर्गतपुरुषविशेषः । तस्य लक्षणं यथा,—
“मृदुवचनसुशीलः कोमलाङ्गः सुकेशः
सकलगुणनिधानः सत्यवादी शशोऽयम् ॥”
इति रतिमञ्जरी ॥

शशकः, पुं, ( शश+स्वार्थे कन् । ) शशः । यथा,
“शशकः शल्लकी गोधा खड्गी कूर्म्मश्च पञ्चमः ।
भक्ष्याः पञ्चनखेष्वेते न भक्ष्याश्चान्यजातयः ॥”
इति स्मृतिः ॥

शशधरः, पुं, ( शशस्य धरः । ) चन्द्रः । ( यथा, साहित्यदर्पणे । १० ।
“इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधरः ॥”)
कर्पूरः । इत्यमरः ॥

शशप्लुतकं, क्ली, नखाघातः । इति शब्दमाला ॥

शशबिन्दुः, पुं, विष्णुः । राजविशेषः । इति मेदिनी ॥ ( यथा, महाभारते । १ । १ । २२५ ।
“रामं दाशरथिञ्चैव शशबिन्दुं भगीरथम् ॥”)
स तु चित्ररथपुत्त्रः । इति पुराणम् ॥

शशभृत्, पुं, ( शशं बिभर्त्तीति । भृ+क्विप् । ) चन्द्रः । इति हेमचन्द्रः ॥ ( यथा, कथासरित्सागरे । ७३ । २५६ ।
“गृहीतो राजशशभृत् वैद्यासाध्येन यक्ष्मणा ॥”)

शशभृद्भृत्, पुं, (शशभृतं चन्द्रं बिभर्त्तीति । भृ+क्विप् ।) शिवः । यथा,—
“आत्मानं योगनिद्राञ्च चिन्तयित्वा मनस्विनी ।
दक्षिणे स्वशरीरस्य भागार्द्धं शशभृद्भृतः ॥”
इति कालिकापुराणे ४४ अध्यायः ॥

शशलोम, [ न् ] क्ली, ( शशस्य लोम । ) शशकस्य रोम । तत्पर्य्यायः । शशोर्णम् २ । इत्यमरः ॥ ( पुं, तन्नामकराजः । यथा, महाभारते । १५ । २० । १४ ।
“शशलोमा स राजासीत् राजन् परमधार्म्मिकः ॥”)

शशशिम्बिका, स्त्री, जीवन्ती । इति राजनिर्घण्टः ॥

शशस्थली, स्त्री, अन्तर्व्वेदी । इति त्रिकाण्डशेषः ॥ सा च गङ्गायमुनयोर्मध्यदेशः । अधुना दोयाव इति नाम्ना ख्यातः ॥

शशाङ्कः, पुं, (शशोऽङ्कं चिह्नं अङ्के क्रोड़े वा यस्य ।) चन्द्रः । इति हलायुधः ॥ ( यथा, कथासरित्सागरे । १८ । ३६५ ॥
“स जनैर्ददृशे तत्र शिखरे ज्वलितौषधौ ।
शशाङ्क इव पूर्व्वाद्रेरुदयस्थो विदूषकः ॥” )
कर्पूरः । इति राजनिर्घण्टः ॥

शशाण्डुलिः, स्त्री, कर्कटीभेदः । तत्पर्य्यायः । बहुफला २ तण्डुली ३ चित्रसम्भवा ४ क्षुद्राम्ला ५ लोमशफला ६ धूम्रा ७ वृत्तफला ८ । अस्या गुणाः ।
“शशाण्डुलि स्तिक्तकटुश्च कोमला
कट्वम्लयुक्ता मधुरा कफापहा ।
पाके तु साम्ला मधुरा विदाहकृत्
कफे तु शुष्का रुचिकृच्च दीपनी ॥”
इति राजनिर्घण्टः ॥

शशादः, पुं, (शशमत्तीति । अद+अच् ।) श्येनपक्षी । इति राजनिर्घण्टः ॥ ( इक्ष्वाकुपुत्त्रः । यथा, महाभारते । ३ । २०१ । १ ।
“इक्ष्वाकौ संस्थिते राजन् शशादः पृथिवीमिमाम् ।
प्राप्तः परमधर्म्मात्मा सोऽयोध्यायां नृपोऽभवत् ॥”
अस्य विकुक्षिरिति नाम आसीत् । अयं हि पित्रनुज्ञातः श्राद्धार्थं मांसमानेतुं वनं गतः मृगान् व्यापादयामास । ततोऽतिश्रान्तः क्षुत्परीत एकं शशमभक्षत् अतोऽस्य शशाद इति नाम अजायत । एतद्विवरणं भागवते । ९ । ६ अध्याये तथा विष्णुपुराणे ४ । २ अध्याये च द्रष्टव्यम् ॥ )

शशादनः, पुं, ( शशमत्तीति । अद+ल्युः । ) श्येनपक्षी । इत्यमरः ॥

शशिकला, स्त्री, पञ्चदशाक्षरपादच्छन्दोविशेषः । यथा,—
“गुरुनिधनमनु लघुरिह शशिकला ।
मलयजतिलकसमुदितशशिकला
व्रजयुवतिलसदलिकगगनगता ।
सरसिजनयनहृदयसलिलनिधिं
व्यतनुत विततरभसपरितरलम् ॥”
इति छन्दोमञ्जरी ॥

( शशिनः कला । चन्द्रकला । यथा,—
"कमलिनी मलिनी दिवसात्यये
शशिकला विकला चयदात्यये ।
इति विधिर्विदधे प्रमदासखम्
भवति विप्लवमः क्रमशो जनः ॥"
इत्युद्भटः ॥ )

शशिकान्तं, क्ली, (शशी कान्तो यस्य ।) कुमुदम् । इति राजनिर्घण्टः ॥

शशिकान्तः, पुं, (शशी कान्तो यस्य ।) चन्द्रकान्तमणिः । इति राजनिर्घण्टः ॥ यथा, वृहत्संहितायाम् । ८० । ४ ।
"वैदूर्य्यविपुलकविमलकराजमणिस्फटिकशशिकान्ताः ॥")

शशिध्वजः, पुं, ( शशी ध्वजे यस्य । ) भल्लाटपुरराजः । यथा,—
"ततः शशिध्वजो राजा युद्धादाकृष्य पुत्रकान् ।
सुयान्मायां मतिं बुद्ध्वा रमां प्रादात् स कल्कये ॥
विशाखयूपभूपाय रुचिराश्व संयुगम् ।
शय्याकर्णकृपेणापि भल्लाटं पुरमाययुः ॥"
इति कल्किपुराणे २५ अध्यायः ॥

शशिप्रभं, क्ली, ( शशिनः प्रभेव प्रभा यस्य । ) कुमुदम् । इति शब्दमाला ॥ मुक्ता । इति राजनिर्घण्टः ॥ चन्द्रप्रभायुक्ते, त्रि ॥ (चन्द्रप्रभासदृशे च, त्रि । यथा महाभारते ।९।६६।४।
"तस्या वाचः समुद्भूतं मारुतेन शशिप्रभम् ॥")

शशिप्रभा, स्त्री, ( शशिनः प्रभा । ) ज्योत्स्ना । इति जटाधरः ॥

शशिभूषणः, पुं, ( शशी भूषणं यस्य । ) शिवः । इति शशिशेखरशब्ददर्शनात् ॥

शशिलेखा, स्त्री, चन्द्रकला । गुडूची । वृत्तभेदः । इति मेदिनी ॥ तद्वृत्तस्य लक्षणादि यथा,—
"म्नौ मो यौ चेत् भवेतां सप्ताङ्कैश्चन्द्रलेखा ।
विच्छेदे ते सुरारे पाण्डुप्रकाशा क्षपाङ्गी
म्लानच्छायं दुकूलं न धारते बिभ्रती सा ।
राधाम्भोदस्य मध्ये लीला यथा चन्द्रलेखा
क्षिप्राभीर्त्या स्मरन्ती धत्ते ध्रुवं जीवयोगम् ॥"
इति छन्दोमञ्जरी ॥

शशिवाटिका, स्त्री, पुनर्नवा । इति राजनिर्घण्टः ॥

शशिशेखरः, पुं, ( शशी शेखरे यस्य । ) शिवः । इति हलायुधः ॥ ( यथा, कथासरित्सागरे । १ । २२ ।
"तस्याः स्तुतिवचो हृद्यं सामङ्गमधिरोप्य सः ।
किन्ते प्रियं करोमीति बभाषे शशिशेखरः ॥")
बुद्धभेदः । तत्पर्य्यायः । वेरम्भः २ हेरुकः ३ चक्रसम्बरः ४ देवः ५ वज्रकपाली ६ निशुम्भी ७ वज्रटीकः ८ । इति त्रिकाण्डशेषः ॥

शशी, [न्] पुं, (शशोऽस्यास्तीति । शश + इनिः ।) चन्द्रः । यथा,—
'हिमांशुश्चन्द्रमाश्चन्द्रः शशी चन्द्रो हिमद्युतिः ।'
भरतधृतशब्दार्णवः ॥
( यथा च हितोपदेशे ।
"शशिनमुत्सर्वगुणोऽपि निर्द्धनः परिभूयते ॥")
अर्हद्गणविशेषः । इति हेमचन्द्रः ॥

शष्पोर्णं, क्ली, ( शष्पस्य ऊर्णा । अभिधानात् क्लीवत्वम् । ) शष्पस्य लोम । इत्यमरः ॥

शश्वत्, व्य, ( शश + बाहुलकात् वत् । ) पुनःपुनः । इत्यमरः ॥ ( यथा, गीतायाम् । ९ । ३१ ।
"क्षिप्रं भवति धर्म्मात्मा शश्वच्छान्तिं निगच्छति ॥")

शष, वधे । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-सक०-सेट् ।) शषति । इति दुर्गादासः ॥

शष्कुलः, पुं, छित्तिः । इति शब्दचन्द्रिका ॥ कड़करमृचा इति भाषा ॥

शष्कुली, स्त्री, ( शष्कुल + गौरादित्वात् ङीष् । ) तिलतण्डुलमाषमिश्रितयवागूः । इति शब्दचन्द्रिका ॥ कर्णरन्ध्रम् । इति शब्दरत्नावली ॥ मत्स्यभेदः । सौरी । इति हिन्दी भाषा । अस्या गुणाः ।
"शष्कुली ग्राहिणी रुच्या मधुरा तुवरा स्मृता ।"
इति भावप्रकाशः ॥
( पिष्टकविशेषः । यथा, महाभारते । १२ । २२८ । ६२ ।
"पायसं कृसरं मांसमपूपानथ शष्कुलीः ॥" )

शष्पं, क्ली, ( शष हिंसायाम् + "खष्पशिल्पशष्पवाष्परूपपर्पतल्पाः ।" उणा० ३ । २८ । इति पत्वं निपात्यते । ) बालतृणम् । इत्यमरः ॥ ( यथा, रघुवंशे । २ । २६ ।
"गङ्गाप्रपातान्तविरूढशष्पं
गौरीगुरोर्गह्वरमाविवेश ॥")

शस, उ वधे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् । क्त्वावेट् ।) उ, शसित्वा शस्त्वा । इति दुर्गादासः ॥

शस, इ ङ आशिषि । आङ्पूर्व्वकोऽयम् । इति कविकल्पद्रुमः ॥ ( भ्वा०-आत्म०-सक०-सेट् । ) इ, आशंस्यते । ङ, आशंसते । आशीरिष्टार्थप्रार्थनम् । इच्छायामित्यन्ये । इति दुर्गादासः ॥

शसनं, क्ली, ( शस + ल्युट् ।) यज्ञार्थपशुहननम् । इति शसनशब्दटीकायां रामाश्रमः ॥ (शस्यते छिद्यतेऽत्र इत्यधिकरणे ल्युट् इत्याख्यानम् । यथा, ऋग्वेदे । १० । ८९ । १४ ।
"मित्रक्रुवो यच्छसने न गावः ।"
"शसने विशसनस्थाने ।"इति तद्भाष्ये सायनः ।)

शस्कुली, स्त्री, पिष्टकविशेषः । पुली पिठा इति भाषा । (यथा, महाभारते । ७ । ६२ । ७ ।
"मोदकान् पूरिकापूपान् घानाधमकशस्कुलीः ॥" )
अस्या गुणाः ।
"पर्पटा लघवो रुच्याः शस्कुल्यः कफपित्तलाः ॥"
काञ्जिकयुक्ततिलशस्कुली त्याज्या यथा,—
"मांसैरिक्षुविकारैश्च काञ्जिकैस्तिलशस्कुलीम् ।
मूलकं माषसूपेन मधुना च न भक्षयेत् ॥"
इति राजवल्लभः ॥*॥
हत्या तद्रूपप्रायश्चित्तं यथा । हत्या पायसपूपशस्कुलीकृशरसंयावशिग्रुलोहितवृन्तनिर्य्यासामेध्यप्रभवाणां भक्षणे कामतश्चान्द्रायणोपवासः । अकामतस्तदर्द्धम् । क्षत्रियादीनां पादपादहानिः । इति प्रायश्चित्तविवेकः ॥

शस्त, इ र लु स्वप्ने । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् ।) इ, शंस्त्यते । नमध्यपाठेऽपि नस्य उपधात्वाभावात् लोपाभावे इदनुबन्धो वेदेषूच्चारणभेदार्थः । लु, शंस्ति । र, वैदिकः । इति दुर्गादासः ॥

शस्तं, क्ली, (शस् + क्तः ।) कल्याणम् । इत्यमरः ॥ ( यथा, महाभारते । १३ । १० । ४२ ।
"सान्त्वयित्वा पुरोधास्तु बहुशस्तं नराधिपम् ॥")
शरीरम् । इति त्रिकाण्डशेषः ॥

शस्तः, त्रि, कल्याणयुक्तः । स्तुतः । इत्यमरः ॥ प्रशस्तः । इति मेदिनी ॥ ( यथा, भागवते । ३ । २८ । १५ ।
"क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः ॥"
निहतः । यथा, महाभारते । ३ । ४० । ३ ।
"शक्राभिषेके सुमहद्धनुर्ज्ज्वलदनिलसमम् ।
प्रगृह्य दानवाः शस्ताः स्वया शक्त्येन च प्रभो ॥")

शस्तकं, क्ली, अङ्गुलित्राणम् । यथा,—
"अङ्गुलित्रं शस्तकञ्च तथा चाङ्गुष्ठरक्षकम् ॥"
इति शब्दरत्नावली ॥

शस्तकेशकः, त्रि, ( शस्ताः केशा यस्य कन् । प्रशस्तकेशयुक्तः । इति शब्दरत्नावली ॥

शस्त्रं, क्ली, ( शस्यते हिंस्यते अनेन । "अमिचिमिदिशसिभ्यः क्त्रः ।" उणा० ४ । १६३ । इति क्त्रः । यद्वा, "दाम्नीशसयुयुजेति ।" ३।२।१८२ । इति ष्ट्रन् । ) लोहम् । अस्त्रम् । इत्यमरः ॥ शस्त्रास्त्रैर्बहुधा मुक्तैरित्यादिदर्शनात् शस्त्रास्त्रयोः कश्चिद्भेदमाह । येन करधृतेन हन्यते तत् शस्त्रं खड्गादि । येन क्षिप्तेन हन्यते तदस्त्रं काण्डादि । इति तट्टीकायां भरतः ॥ तत्पर्य्यायः ।
"अस्त्रे शस्त्रं प्रहरणमुद्घातो हेतिरायुधः ।"
इति शब्दरत्नावली ॥
"एकैकमस्त्रं शस्त्रञ्च देवैर्मुक्तं सहस्रधा ।
चिच्छेद लीलयैवेशो जगतां मधुसूदनः ॥"
इति विष्णुपुराणे ५ अंशे ३० अध्यायः ॥
अस्त्रं मन्त्राभिमन्त्रितम् । शस्त्रं तदितरत् । इति तट्टीका ॥*॥ राज्ञां अस्त्राचार्य्यो यथा,—
"यन्त्रमुक्ते पाणिमुक्ते अमुक्ते मुक्तधारिते ।
अस्त्राचार्य्यो निरुद्वेगः कुशलश्च विशिष्यते ॥"
तदगारनियुक्तस्य लक्षणं यथा,—
"स्थापनाज्ञाततत्त्वज्ञः सततं प्रतिजागृता ।
राज्ञः स्यादायुधागारे दक्षः कर्म्मसु चोद्यतः ॥"
इति मात्स्ये १८९ अध्यायः ॥
शस्त्रचिकित्सा यथा । अथातोऽग्रोपहरणीयमध्यायं व्याख्यास्यामः । त्रिविधं कर्म्म । पूर्व्वकर्म्म प्रधानकर्म्म पश्चात्कर्म्मेति । तद्व्याधिं प्रत्युपदेक्ष्यामः । अस्मिन् शास्त्रे शस्त्रकर्म्म-

प्राधान्यात् शस्त्रकर्म्मैव तावत् पूर्व्वमुपदेक्ष्यामः शस्त्रावचारणाच्च । तच्च शस्त्रकर्म्माष्टविधम् । तद्‌यथा । छेद्यं भेद्यं लेख्यं वेध्यमेष्यमाहार्य्यं विस्राव्यं सीव्यमिति ॥ * ॥ अतोऽन्यतमं कर्म्म चिकीर्षता वैद्येन पूर्व्वमेवोपकल्पयितव्यानि । तद्‌यथा । यन्त्रशस्त्रक्षाराग्निशलाकाशृङ्गजलौकालाबुजाम्बवौष्ठपिचुप्रोत-सूत्रपत्रपट्टमधुघृतवसापयस्तैलतर्पणकाषायालेपनकल्कव्यजनशीतोष्णोदककटाहादीनि परिकर्म्मिणश्च स्निग्धाः स्थिरा बलवन्तः । ततः प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु दध्यक्षतान्नपानरत्नैरग्निं विप्रान् भिषजश्चार्च्चयित्वा कृतबलिमङ्गलस्वस्तिवाचनं लघु भुक्तवन्तं प्राङ्‌मुखमातुरमु *पवेश्य* यन्त्रयित्वा प्रत्यङ्‌मुखो वैद्यो मर्म्मशिरास्नायुसन्ध्यस्थिधमनीः परिहरन्ननुलोमं शस्त्रं निदध्यादापूयदर्शनात् सकृदेवापहरेच्छस्त्रमाशु च । महत्स्वपि च पाकेषु द्व्यङ्गुलं त्र्यङ्गुलं वा शस्त्रपदमुक्तम् । तत्रायतो विशालः समः सुविभक्त इति व्रणगुणाः । भवतश्चात्र ।

"आयतश्च विशालश्च सुविभक्तो निराश्रयः ।
प्राप्तकालकृतश्चापि व्रणः कर्म्मणि शस्यते ॥
शौर्य्यमाशु क्रिया शस्त्रतैक्ष्ण्यमस्वेदवेपथू ।
असंमोहश्च वैद्यस्य शस्त्रकर्म्मणि शस्यते ॥"

एकेन वा व्रणेनाशुष्यमाणेनान्तरालमवेक्ष्य अपरान् व्रणान् कुर्य्यात् । भवन्ति चात्र ।

"यतो यतो गतिं विद्यादुत्सङ्गो यत्र यत्र च ।
तत्र तत्र व्रणं कुर्य्याद्‌यथा दोषो न तिष्ठति ॥"

तत्र भ्रूगण्डशङ्खललाटाक्षिपुटौष्ठदन्तवेष्टकक्षाकुक्षिवङ्क्षणेषु तिर्य्यक्छेद उक्तः ॥

"चन्द्रमण्डलवच्छेदान् पाणिपादेषु कारयेत् ।
अर्द्धचन्द्राकृतींश्चापि गुदे मेढ्रे च बुद्धिमान् ॥"

अन्यथा तु शिरास्नायुच्छेदनमतिमात्रं वेदना चिराद्‌व्रणसंरोहो मांसकन्दी प्रादुर्भावश्चेति । मूढगर्भोदरार्शोऽश्मरीभगन्दरमुखरोगेष्वभुक्तवतः कर्म्म कुर्व्वीत । ततः शस्त्रमवतार्य्य शीताभिरद्भिरातुरमाश्वास्य समन्तात् परिपीड्याङ्गुल्या व्रणमभिमृज्य प्रक्षाल्य कषायेण प्लोतेनोदकमादाय तिलकल्कमधुसर्पिःप्रगाढामौषधयुक्तां वर्त्तिं प्रणिदध्यात् । ततः कल्केनाच्छाद्य नातिस्निग्धां नातिरूक्षां नातिघनां कवलिकां दत्त्वा वस्त्रपट्टेन बध्नीयाद्वेदनारक्षोघ्नैर्धूपैर्धूपयेद्रक्षोघ्नैश्च मन्त्रै रक्षां कुर्व्वीत । ततो गुग्गुल्वगुरुसर्ज्जरसवचागौरसर्षपचूर्णैर्लवणनिम्बपत्रव्यामिश्रैराज्ययुक्तैर्धूपैर्धूपयेत् । आज्यशेषेण चास्य प्राणान् समालभेत । उदकुम्भाच्चापो गृहीत्वा प्रोक्षयन् रक्षाकर्म्म कुर्य्यात्तद्वक्ष्यामः ॥ * ॥

"कृत्यानां प्रतिघातार्थं तथा रक्षोभयस्य च ।
रक्षाकर्म्म करिष्यामि ब्रह्मा तदनुमन्यताम् ॥
नागाः पिशाचा गन्धर्व्वाः पितरो यक्षराक्षसाः ।
अभिद्रवन्ति ये ये त्वां ब्रह्माद्या घ्नन्तु तान् सदा ॥
पृथिव्यामन्तरीक्षे च ये चरन्ति निशाचराः ।
दिक्षु वास्तुनिवासाश्च पान्तु त्वां ते नमस्कृताः ।
पान्तु त्वां मुनयो ब्राह्म्या दिव्या राजर्षयस्तथा ।
पर्व्वताश्चैव नद्यश्च सर्व्वाः सर्व्वेऽपि सागराः ॥
अग्नी रक्षतु ते जिह्वां प्राणान् वायुस्तथैव च ।
सोमो व्यानमपानं ते पर्ज्जन्यः परिरक्षतु ॥
उदानं विद्युतः पान्तु समानं स्तनयित्नवः ।
बलमिन्द्रो बलपतिर्मनुर्मन्ये मतिं तथा ॥
कामांस्ते पान्तु गन्धर्व्वाः सत्त्वमिन्द्रोऽभिरक्षतु ।
प्रज्ञां ते वरुणो राजा समुद्रो नाभिमण्डलम् ॥
चक्षुः सूर्य्यो दिशः श्रोत्रे चन्द्रमाः पातु ते मनः ।
नक्षत्राणि सदा रूपं छायां पान्तु निशास्तव ॥
रेतस्त्वाप्याययन्त्वापो रोमाण्योषधयस्तथा ।
आकाशं खानि ते पातु देहं तव वसुन्धरा ॥
वैश्वानरः शिरः पातु विष्णुस्तव पराक्रमम् ।
पौरुषं पुरुषश्रेष्ठो ब्रह्मात्मानं ध्रुवो भ्रुवौ ॥
एता देहे विशेषेण तव नित्या हि देवताः ।
एतास्त्वां सततं पान्तु दीर्घमायुरवाप्नुहि ॥
स्वस्ति ते भगवान् ब्रह्मा स्वस्ति देवाश्च कुर्व्वताम् ।
स्वस्ति ते चन्द्रसूर्य्यौ च स्वस्ति नारदपर्व्वतौ ॥
स्वस्त्यग्निश्चैव वायुश्च स्वस्ति देवाः सहेन्द्रगाः ।
पितामहकृता रक्षा स्वस्त्यायुर्व्वर्द्धतां तव ।
ईतयस्ते प्रशाम्यन्तु सदा भव गतव्यथः ॥"

इति स्वाहा ॥

"एतैर्व्वेदात्मकैर्मन्त्रैः कृत्या व्याधिविनाशनैः ।
मयैवं कृतरक्षस्त्वं दीर्घमायुरवाप्नुहि ॥" * ॥

ततः कृतरक्षमातुरमागारं प्रवेश्याचारिकमादिशेत् । ततस्तृतीयेऽहनि विमुच्यैवं बध्नीयाद्वस्त्रपट्टेन । न चैनं त्वरमाणोऽपरेद्युर्मोक्षयेत् । द्वितीयदिवसे परिमोक्षणाद्विग्रथितो व्रणश्चिरादुपसंरोहति तीव्ररुजश्च भवति । अत ऊर्द्ध्वं दोषकालबलादीनवेक्ष्य कषायालेपनबन्धाहाराचारान् विदध्यात् । न चैनं त्वरमाणः सान्तर्दोषं रोपयेत् स ह्यल्पेनाप्यपचारेणाभ्यन्तरमुत्सङ्गं कृत्वा भूयोऽपि विकरोति । भवन्ति चात्र ।

"तस्मादन्तर्व्बहिश्चैव सुशुद्धं रोपयेद्‌व्रणम् ।
रूढेऽप्यजीर्णव्यायामव्यवायादीन् विवर्जयेत् ॥
हर्षं क्रोधं भयञ्चापि यावदास्थैर्य्यसम्भवात् ।
मासान् षट् सप्त वा नूनं विधिरेषः प्रशस्यते ॥
हेमन्ते शिशिरे चैव वसन्ते चापि मोक्षयेत् ।
त्र्यहात् द्व्यहाच्छरद्‌ग्रीष्मवर्षास्वपि च बुद्धिमान् ॥
अतिपातेषु रोगेषु नेच्छेद्विधिमिमं भिषक् ।
प्रदीप्तागारवच्छीघ्रं तत्र कुर्य्यात् प्रतिक्रियाम् ॥
या वेदना शस्त्रनिपातजाता
तीव्रा शरीरं प्रदुनोति जन्तोः ।
घृतेन सा शान्तिमुपैति सिक्ता
कोष्णेन यष्टीमधुकान्वितेन ॥"

इति सुश्रुते ५ अध्यायः ॥

**शस्त्रः**, पुं, ( शस्यतेऽनेनेति । शस वधे + "असिचि-मिदिशसिभ्यः क्तः ।" उणा० ४।१६३। इति क्तः । यद्वा, दाम्नीशसयुयुजेति ।" ३ । २ । १८२ । इति ष्ट्रन् । ) खड्‌गः । यथा,—

"रिष्टिः खड्‌गस्तरवारिः शस्त्रो भद्रात्मजश्च सः ॥"

इति त्रिकाण्डशेषः ॥

**शस्त्रकं**, क्ली, ( शस्त्रमेव । स्वार्थे कन् । ) लौहम् । इत्यमरः ॥

**शस्त्रकोशतरुः**, पुं, ( शस्त्रस्य खड्‌गस्य कोश इव तरुः । ) महापिण्डीतरुः । इति राजनिर्घण्टः ॥

**शस्त्रजीवी**, [ न् ] ( शस्त्रेण जीवतीति । जीव + णिनिः । ) शस्त्राजीवः । इति हेमचन्द्रः ॥ ( यथा, बृहत्संहितायाम् । १७ । २४ ।

"रविजेन सिते विजिते
गणमुख्याः शस्त्रजीविनः चत्रम् ॥")

**शस्त्रधारणजीवकः**, त्रि, ( शस्त्रधारणेन जीवतीति । जीव + ण्वुल् । ) शस्त्राजीवः । इति शब्दरत्नावली ॥

**शस्त्रपाणिः**, त्रि, ( शस्त्रं पाणौ यस्य । ) शस्त्रहस्तः । यथा,—

"उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिश्च घातकः ।
केशाकेशिग्रहीतश्च युगपत पारदारिकः ॥"

इति व्यवहारतत्त्वम् ॥

अपि च ।

"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारापहारी च षडेते आततायिनः ॥"

इति प्रायश्चित्तविवेकः ॥

**शस्त्रभृत**, त्रि, शस्त्रधारी । शस्त्रं बिभर्त्तीति । भृधातोः क्विप्‌प्रत्ययेन निष्पन्नमेतत् ॥ ( यथा, रघुः । २ । ४० ।

"शस्त्रेण रक्ष्यं यदशक्यरक्षं
न तद्यशः शस्त्रभृतां क्षिणोति ॥")

**शस्त्रमार्जः**, पुं, ( शस्त्राणि मार्ष्टीति । मृज + अण् । ) शस्त्रमार्जनकर्त्ता । सिकलगार इति भाषा । तत्पर्य्यायः । असिधावकः २ । इत्यमरः ॥ अस्त्रमार्जः ३ असिधावः ४ । इति शब्दरत्नावली ॥ शाणाजीवः ५ भ्रमासक्तः ६ । इति हेमचन्द्रः ॥

**शस्त्रहतः**, त्रि, ( शस्त्रेण हतः । ) शस्त्राघातेन मृतः । तस्याशौचादि यथा । व्यासः ।

"क्षतेन म्रियते यस्तु तस्याशौचं भवेद्‌द्विधा ।
आसप्ताहात् त्रिरात्रं स्यात् दशरात्रमतःपरम् ॥
शस्त्राघाते त्र्यहादूर्द्ध्वं यदि कश्चित् प्रमीयते ।
अशौचं प्राकृतं तत्र सर्व्ववर्णेषु नित्यशः ॥"

अत्र शस्त्रघातपदं क्षतेतरशस्त्रघातपरं पारिभाषिकशस्त्रघातपरमपि । यथा, देवीपुराणे ।

"पश्चिमत्स्यमृगैर्यै तु दंष्ट्रिशृङ्गिनखैर्हताः ।
पतनानशनप्रायैर्व्वज्राग्निविषबन्धनैः ।
मृता जलप्रवेशेन ते वै शस्त्रहताः स्मृताः ॥"

अन्यथा क्षतं विना पतनादिभिर्विलम्बमृतानां दिनग्रहणे अनध्यवसायः स्यात् । न च शाङ्कीयव्यवहारेऽन्तरङ्गत्वेन पारिभाषिकस्यैव युक्तत्वमिति वाच्यं श्राद्धे पारिभाषिकापारिभाषिक-

शस्त्रघातमृत्युवदत्रापि तथायुक्तत्वात् पारिभाषिकत्वादेव न प्रकरणनियमः ॥ * ॥
"क्रोधात् प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम्।
गिरिवृक्षप्रपातञ्च ये कुर्व्वन्ति नराधमाः ॥
महापातकिनो ये च पतितास्ते प्रकीर्त्तिताः।
पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः ॥
न चाश्रुपातः पिण्डो वा कार्य्यं श्राद्धादिकं क्वचित्।
एतानि पतितानाञ्च यः करोति विमोहितः।
तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्न चान्यथा ॥"* ॥
तदितरत्र मरीचिः।
"विषशस्त्रश्वापदाहितिर्य्यग्ब्राह्मणघातिनाम्।
चतुर्द्दश्यां क्रिया कार्य्या अन्येषान्तु विगर्हिता ॥"
इति शुद्धितत्त्वम् ॥

शस्त्रहतचतुर्द्दशी, स्त्री, (शस्त्रहतानां चतुर्द्दशी। युद्धादिहतानां श्राद्धादिकर्म्मणि प्रशस्ततया-ख्यातत्वम्।) गौणाश्विनकृष्णचतुर्द्दशी। गौणकार्त्तिककृष्णचतुर्द्दशी च। यथा, लिङ्ग-पुराणम्।
"दीपमालां तथा कृष्णचतुर्द्दश्यां शिवाग्रतः।
चतुष्पथे च नद्याञ्च चत्वरेषु गृहेषु च।
एकविंशकुलोपेतो वसेच्छिवपुरे नरः ॥"
अत्र शस्त्रहतानामुल्कादानं अन्येषान्तु दर्शे। इति संवत्सरकौमुदी ॥ * ॥ अन्यच्च। अथ शस्त्रहतचतुर्द्दशी तत्र विष्णुः। युद्धहतानां श्राद्धकर्म्मणि चतुर्द्दशी प्रशस्ता। युद्धहतानामेवेति न नियमार्थमिदम्। ब्रह्मपुराणे।
"प्रायोऽनशनशस्त्राग्निविषाद्युद्बन्धिनास्तथा।
चतुर्द्दश्यान्तु कर्त्तव्यं तृप्त्यर्थमिति निश्चयः ॥"
प्रायो महापथगमनम्। वायुपुराणे।
"युवानस्तु गृहे यस्य मृतास्तेषान्तु दापयेत्।
शस्त्रेण तु हता ये वै तेषां दद्याच्चतुर्द्दशीम् ॥"
युवान एव पित्रादयो मृता इत्यर्थः। मरीचिः।
"विषशस्त्रश्वापदाहितिर्य्यग्ब्राह्मणघातिनाम्।
चतुर्द्दश्यां क्रिया कार्य्या अन्येषान्तु विगर्हिता ॥"
ब्राह्मणहतघातोऽस्यास्तीति ब्राह्मणघाती ये च वै ब्राह्मणैर्हता इति ब्रह्मपुराणवचनात्। न तु हतब्राह्मणघातः तस्य पतितत्वात् अन्येषाम-शस्त्रादिहतानाम्। एतच्च शस्त्रहतश्राद्धं विष्ण्वादिभिः सामान्यप्रकरणलिखनात् सकल-कृष्णपक्षसाधारणं पित्रादीनामेव पार्व्वणविधि-प्रकरणात् पार्व्वणविधिना कार्य्यम्।
"सपिण्डीकरणादूर्द्ध्वं यत्र यत्र प्रदीयते।
तत्र तत्र त्रयं कुर्य्याद्वर्ज्जयित्वा मृताहनि ॥"
इति शङ्खवचनाच्च ॥ * ॥
ननु अन्येषान्तु विगर्हिता इति श्रवणात्। कथं त्रैपुरुषिकपार्व्वणविधिः। न यस्य पुरुषास्त्रय एव शस्त्रहतास्तस्य त्रैपुरुषिकविधिरुपपद्यते। एवं यस्य द्वौ शस्त्रहतावेको वा तेनापि द्वैपुरु-षिकैकपुरुषिकं पार्व्वणं कर्त्तव्यम्। यथा, मनुः।
"पिता यस्य तु वृत्तः स्यात् जीवेच्चापि पिता-
महः।
पितुः स नाम सङ्कीर्त्य कीर्त्तयेत् प्रपितामहम् ॥"
तथा हारीतः।
"पितामहेऽपि जीवे वै पितर्य्येव समापयेत् ॥"
तन्वेकोद्दिष्टमेव श्रूयते। यथा शङ्खः।
"सपिण्डीकरणादूर्द्ध्वं मृते कृष्णचतुर्द्दशीम्।
प्रतिसंवत्सरादन्यदेकोद्दिष्टं न कारयेत् ॥"
यमः।
"सपिण्डीकरणादूर्द्ध्वं यत् पितृभ्यः प्रदीयते।
एकोद्दिष्टविधानेन तत् कार्य्यं शस्त्रघातिने ॥"
भविष्यपुराणे।
"समत्वमागतस्यापि पितुः शस्त्रहतस्य च।
चतुर्द्दश्यान्तु कर्त्तव्यमेकोद्दिष्टं न पार्व्वणम् ॥
चतुर्द्दश्यान्तु यच्छ्राद्धं सपिण्डीकरणे कृते।
एकोद्दिष्टविधानेन तत्कार्य्यं शस्त्रघातिने ॥"* ॥
उच्यते। एषां वचनानाममूलकत्वात् समूलत्वेऽपि पार्व्वणाशक्तविषयाण्येतानि विष्ण्वादिवचनेषु पार्व्वणावगतेः। आश्वादीनान्तु शस्त्रहताना-मेकोद्दिष्टविधिना कार्य्यम्।
"अपुत्त्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च
ये।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्व्वणम् ॥"
इत्यापस्तम्बवचनेन पार्व्वणनिषेधात्। तच्च न सकलकृष्णपक्षसाधारणं विष्ण्वादिवचनेषु श्राद्ध-शब्दस्य पार्व्वणपरत्वोक्तेः। किन्त्वाश्विनमासीय-कृष्णपक्षविषयम्। ब्रह्मपुराणे प्रायोऽनशने-त्यादिना सकलकृष्णपक्षसाधारणं श्राद्धमभि-धाय आश्विने। तर्पणीयाश्चतुर्द्दश्यां लुप्तपिण्डो-दकक्रिया। इति यत् पुनरभिधानं तच्छस्त्र-हतभ्रात्रादिविषयं अतएव तत्रैवामावास्यायां पितरः पूज्या नान्दीमुखा अपीति वृद्धप्रपिता-महादीनामपि श्राद्धं दर्शितम्। इयञ्च चतु-र्द्दश्यामशस्त्रहतश्राद्धनिन्दा आश्विनमासीय-पक्षश्राद्धादिकव्यतिरिक्तसामान्यकृष्णपक्षवि-हितश्राद्धकाम्यश्राद्धविषया प्रकरणभेदेन श्राद्ध-कर्म्मभेदात् सामान्यविशेषन्यायात् इतरथा चतु-र्द्दश्यां संक्रान्तिश्राद्धेऽशस्त्रहतनिन्दा स्यात्। अतएव कृष्णपक्षे दशम्यादौ वर्ज्जयित्वा चतु र्द्दशीमिति मनुवचनेऽपि चतुर्द्दशीवर्ज्जनं पक्ष-श्राद्धादिव्यतिरिक्तश्राद्धविषयम् ॥ * ॥ ननु शस्त्रादिहतानां श्राद्धनिषेधः श्रूयते। तथा छागलेयः।
"शस्त्रविप्रहतानाञ्च शृङ्गिदंष्ट्रिसरीसृपैः।
आत्मनस्त्यागिनाञ्चैव श्राद्धमेषां न कारयेत् ॥"
सत्यं बुद्धिपूर्व्वहतानामेव। प्रमादमृतानान्तु श्राद्धादिकमाहाङ्गिराः।
"अथ कश्चित् प्रमादेन म्रियतेऽग्न्युदकादिभिः।
अशौचं तस्य कर्त्तव्यं कर्त्तव्या चोदकक्रिया ॥"
अबुद्धिपूर्व्वमपि दृष्ट्यादिभिः क्रीडां कुर्व्वतां मृतानां न कर्त्तव्यम्। यथा, ब्रह्मपुराणम्।
"शृङ्गिदंष्ट्रिनखिव्यालविषवह्निस्त्रिया जलैः।
आदरात् परिहर्त्तव्यः कुर्व्वन् क्रीडां मृतस्तु यः ॥"
परिहर्त्तव्यः श्राद्धादौ शास्त्रानुमत्या बुद्धिपूर्व्व-मृतानामपि कर्त्तव्यम्। यथाह वृद्धगार्ग्यः।
"वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥
तस्य त्रिरात्रमशौचं द्वितीये त्वस्थिसञ्चयः।
तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमिष्यते ॥"
एवं क्रीडाव्यतिरेकेणाबुद्धिपूर्व्वं मृताः शास्त्रानु-मत्या बुद्धिपूर्व्वकमृता अपि श्राद्धार्हाः कथं लुप्तपिण्डोदकत्वमिति चेत् गौणमिति ब्रूमः। बुद्धिपूर्व्वे पिण्डोदकक्रियालोपादिति। इति श्राद्धविवेकः ॥

शस्त्रहस्तः, पुं, शस्त्रं हस्ते यस्य सः। इति शस्त्र-पाणिशब्ददर्शनात् ॥

शस्त्राजीवः, त्रि, (शस्त्रेण आजीवतीति। आ + जीव + अच्।) असिजीवी। तत्पर्य्यायः। काण्डपृष्ठः २ आयुधीयः ३ आयुधिकः ४। इत्यमरः ॥ काण्डस्पृष्टः ५। इति तट्टीका ॥ काण्डपृष्ठः ६ शस्त्रधारणजीवकः ७। इति शब्दरत्नावली ॥

शस्त्राभ्यासः, पुं, (शस्त्राणां अभ्यासः।) अस्त्र-शिक्षा। तत्पर्य्यायः। खुरली २। इति त्रिकाण्डशेषः ॥

शस्त्रायसं, क्ली, (शस्त्रार्थं यदायसम्।) लोहम्। इति राजनिर्घण्टः ॥

शस्त्री, स्त्री, (शस् + ष्ट्रन्। स्त्रियां ङीप्।) छुरिका। इति मेदिनी ॥ (यथा, माघे। ४। ४४।
"शस्त्रीश्यामैरंशुभिराशुद्रुतमम्भ-
श्छायामच्छति नीली सलिलस्य ॥")

शस्त्री, [न्] त्रि, शस्त्रविशिष्टः। अस्त्रधारी। शस्त्रशब्दादिन्प्रत्ययेन निष्पन्नमेतत् ॥ (यथा, कामन्दकीयनीतिसारे। ७। ३७।
"आप्तशस्त्रानुगतः प्रविशेच्च
सङ्कटेषु गहनेषु न तिष्ठेत् ॥")

शस्यं, क्ली, बालतृणम्। इत्यमरटीकायां भरतः ॥ प्रतिभाहानिः। इति जटाधरः ॥

शस्यं, क्ली, (शस + "तकिशसिचतियतीति।" ३। १। ६७। इत्यस्य वार्त्तिकोक्त्या यत्।) वृक्षादि-निष्पन्नम्। तत्पर्य्यायः। फलम् २। इत्यमरः ॥ वृक्षाणां लतादीनाञ्च फलं निष्पन्नत्वमागतं आम्रादिकं शस्यं सस्यपदवाच्यं इत्यन्वयः। फलति निष्पद्यते फलं फलनिष्पत्तौ पचादित्वा-दच्। सस्ति स्वपिति सस्यं षस षु र स्वप्ने हलो-रिति यः सस्यं द्विदन्त्यम्। ग्राम्यकविकथाबन्ध इव नीरसस्यमनोहरो देश इति नलदमयन्ती-श्लेषात्।
"अंशनं शीसकं सस्यं गस्तं साक्षा च साध्व-
सम् ॥"
इत्युष्मविवेकाच्च ॥ तालव्यादिदन्त्यान्तश्च तथा हि शसु हिंसास्तुत्योरित्यस्मात् क्त इव न्वेनेति यदपि यत् शस्यं तत् क्रियावाच्येऽपि फलेऽपि दृश्यते। तालव्या अपि दन्त्याश्च शस्यसूकर-पांशव इत्युष्मभेदः। इति तट्टीकायां भरतः ॥ * ॥ क्षेत्रस्थधान्यादि। यथा,—
"शस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते।

ईशानवाह्ये चरकी द्वितीये
विदारिका पूतनिका तृतीये ।
पापाभिधा मारुतकोणके तु
पूज्याः सुरा उक्तविधानतस्तु ॥ ✱ ॥

ब्रह्मा वेदपदस्तु तेन समका देवार्य्यमाद्यास्तमी
कोणेऽष्टौ द्विपदास्तथाष्टमरुतः कोणेऽर्द्धभागाद्
बहिः ।

शेषा एकपदाः सुरास्तु कथिता वेदर्त्तुके-६४
ऽथो नव
ब्रह्मा षट्पदिनोऽर्य्यमादिविबुधा ईशादयश्चै-
कशः ॥

ब्रह्मा कलांशो वसुतोऽर्य्यमाद्याः
कोणेऽष्ट बाह्येऽपि च सार्द्धभागाः ।
विधातृकोणे द्विपदास्तथाष्टौ
शेषाः सुरा एकपदाः शतांशे ॥✱॥

ब्रह्माजिनांश२४ उदितः शिवतोऽर्य्यमाद्याः
कोणेषु सार्द्धपदतोऽपि तथैव चाष्टौ ।
शेषा द्विभागसमका रविभागकोऽयं
पूज्यो रथाश्वगजवाहनकेऽस्युयन्ने ॥

यस्मिं त्रयोदशपदैरपि पूजनीय-
स्तन पञ्चविंशतिरजो दशतोऽर्य्यमाद्याः ।
कोणेऽथयोऽमरगणा बहिरके कलांशा
भद्रेऽधिकं रविविभागपरे द्विभागाः ॥✱॥

द्वात्रिंशत् कमलासनोऽर्य्यमसुखाः स्युः सूर्य-
भागा क्रमात्
कोणेऽन्येऽष्टसुरा द्विभागसहिता बाह्येषु
सार्द्धांशकाः ।
अष्टौ रामपदाः पुनर्द्विपदकाः षड्भागिनोऽष्टौ
सुराः
क्षेत्रे शस्तवचन्द्रभागसहिते १९६ स्याद्देवतानां
क्रमः ॥ ✱ ॥
वेदांशो विधिरर्य्यमप्रभृतयस्त्र्यंशा नवम्बरके
कोणेऽन्येऽष्टपदार्द्धगाः परसुराः षड्भागहीने
पदे ।
वास्तोर्नन्दयुगांश ४९ एवमधुनाष्टांशैश्चतुः-
षष्टिके
सन्धेः सूत्रमितान् सुधीः परिहरेद्भित्तीस्तुला-
स्तम्भकान् ॥ ✱ ॥

रेखाद्वयं कोणगतं विधेय-
मंशान्तरेणैव तु कर्णसूत्रात् ।
यदष्टसूत्रैः कथितं तु पद्मं
तत्पीडनात् स्वामिधनप्रणाशः ॥
प्रोक्तं चतुर्व्विंशतिलाङ्गुलं यत्
पादार्द्धगं हानिकरं प्रजायाः ।
षड्भिस्तु सूत्रैर्मरणाय वज्रं
कोणे त्रिशूलञ्च रिपोर्भयाय ॥
परीक्ष्य भूमीमवसेचयेत्तां
सुपञ्चगव्येन ततो विलेख्या ।
रेखा सुवर्णेन मणिप्रवालैः
पिष्टाक्षतैर्व्वापि पुनश्च दूर्व्वैः ॥
द्वात्रिंशदंशाः पृथुले च दैर्घ्ये
कोणेषु वर्ज्या जिनसंख्य२४भागाः ।

एतत्पदानां कथितं सहस्रं
क्षेत्रञ्च सर्व्वोत्तममेव वास्तोः ॥ ✱ ॥
मध्ये ब्रह्मा पूजनीयः शतांशै-
श्चत्वारिंशद्भिः पदैर्ब्राह्मवीथी ।
प्रोक्ता देवा अर्य्यमाद्या अशीत्या
मध्ये कोणेऽष्टौ शतं चाष्टषष्ट्या ॥
कोणेऽथयो नन्दपदैः सुराश्च
शेषाश्च बाह्ये वसुभागिनश्च ।
वीथी च बाह्ये रविभागयुक्तं
शतं पदानां कथितं मुनीन्द्रैः ॥
दुर्गप्रतिष्ठाविषये निवेशे
तथा महार्चासु च कोटिहोमे ।
मेरौ च राष्ट्रेष्वपि ज्येष्ठलिङ्गे
वास्तुः सहस्रेण पदैः प्रपूज्यः ॥✱॥
त्रिमेखलं शङ्करदिग्विभागे
कुण्डं प्रकुर्य्यात् करतो युगास्रम् ।
होमं सुराणां शतमष्टयुक्तं
प्रत्येकमष्टाधिकविंशतिं वा ॥
मध्वाज्यदुग्धैर्दधिशर्कराभ्यां
क्षणैस्तिलैर्व्रीहियवैर्यवान्नैः ।
पलाशदूर्व्वाङ्कुरदुग्धवृक्षै-
र्होमं तदन्ते सुरपूजनञ्च ॥
ईशे घृताक्षमपरे सघृतौदनञ्च
दद्यान्नयाय हरिताम्बरमेव कूर्म्मम् ।
रत्नानि पिष्टकमयं कुलिशं सुरेन्द्रे
धूम्रं वितानमुदितञ्च दिवाकरस्य ॥
गोधूमयुक्तं घृतमेव सत्ये
मत्स्यान् भृशे शष्कुलिमन्तरीक्षे ।
वह्नौ स्रुचं पूष्णि तथैव लाजा
दद्याद्धर्म्मे चणकौदनञ्च ।
मध्वन्नञ्च गृहक्षताय यमतो मांसौदनं दापयेत्
गन्धर्व्वे शतपत्रमोदनयुतं भृङ्गेऽजजिह्वां तथा ।
प्रोक्ता नीलजवा मृगाय पितृतो देयाश्च सक्तो·
दकाः
पेष्टं लाजबलिं तथैव विधिवद्दद्याच्च दौवारिके ॥
सुग्रीवाय च पूपका गणवरे श्वेतप्रसूनं पयः
पद्मं वारुणके सुराप्यसुरके तैलं तिलाः शोषके ।
पापाख्येऽपि च पक्वमांससुदितं रोगाय सर्व्वौ-
षधीः
गोक्षीरं फणिने च मुख्यविबुधे श्रीखण्डभक्ते
तथा ॥
भल्लाटाय सुवर्णकं धनपतौ मल्लाज्यदुग्धं तथा
शक्तून् पर्व्वतकेऽदितेस्तु लपिकां दद्याद्दितौ
पूरिकाम् ।
सक्षीरं दधिकं क्रमेण विहितं त्वापापवत्से तथा-
प्यर्य्यमृणेऽरुणचन्दनञ्च पयसा युक्ता तथा
शर्करा ॥
सावित्रेऽपि च लड्डुकाश्च सवितुः पूपा गुडा
सद्घृता
देयं वाथ विवस्वते घृतयुतं दुग्धं तथा मोदकाः ।
इन्द्राख्ये कुसुमसगिन्द्रजयके देयं तथा चम्पकं
मैत्रे दुग्धघृतञ्च गुग्गुलुयुतो गन्धस्तथा ब्रह्मके ।

तन्मिश्रमन्नत्वपि रुद्रदासे
सन्नत्रमालां पृथिवीधराय ।
पयस्वलां गामक्षतं घटञ्च
दद्याद्विधौ स्वर्णमतोऽखिलेभ्यः ॥
सुरार्भस्य मांसं विहितं चरक्यै
तथैव पीनौदनको विदार्य्यै ।
रक्तौदनैः पूतनिकार्च्चनीया
मत्स्यासवेनापि तथैव पापाः ॥
मांसं पक्वं पिलिपिञ्जाय तज्जम्भायै विहितं
सद्यः ।
स्कन्दाय तन्मदिरायुक्तं चार्य्यमृषौ दिशि
पूर्व्वादौ ॥

यः पूजयेद्वास्तुमनन्ययुक्ता
न तस्य दुःखं भवतीह किञ्चित् ।
जीवत्यसौ वर्षशतं सुखेन
स्वर्गे नरस्तिष्ठति कल्पमेकम् ॥”

इति श्रीसूत्रधारमण्डनविरचिते वास्तुशास्त्रे
राजवल्लभे वास्तुलक्षणम् ०[अध्यायः ॥ ✱ ॥
“आयर्क्षव्ययतारकांशकविधुं राशिं गृहादौ
तथा
धान्यं सौख्ययशोऽभिवृद्धिरधिका यस्मादतः
कथ्यते ।
आयास्तु ध्वजधूमसिंहशुनका गोरासभेभाः
क्रमात्
ध्वाङ्क्षश्चाष्टम आयभेषु विषमाः श्रेष्ठाः सुराणां
गृहे ॥
मानं देवगृहादिभूपसदने शास्त्रोक्तहस्तेन तत्
गेहे कर्म्मकरस्य नायकरतः शास्त्रेण देयं गृहे ।
अथो दण्डकराङ्गुलादिमपि ते हस्ताङ्गुलैरंशतः
क्षेत्रस्याप्यनुमानतोऽपि नगरे दण्डेन मानं पुरे ॥
आयः कल्प्यो हस्तमेयैः करैश्च
क्षेत्रे मात्रानिर्म्मिते मातृकाभिः ।
मध्ये पर्य्यङ्कासने मन्दिरे च
देवागारे मण्डपे भित्तिबाह्ये ॥
छत्रे देवगृहे द्विजस्य भवने स्याद्वेदिकायां जले
विस्तारोच्छ्रयवस्त्रभूषणमठागारेषु शस्तो ध्वजः ।
धूमो वह्न्युपजीविनामपि गृहे कुण्डे च होमो-
द्भवे
सिंहद्वारनृपालयेऽस्त्रनिचये सिंहश्च सिंहा-
सने ॥
चण्डाले शुनको विशान्तु वृषभो हर्म्ये द्वयानां
हितो
वाणिज्ये धनभोजनस्य भवनेऽथो वाद्यगेहे
खरः ।
वादित्रे खरजीविनामपि गृहे शौद्रे गजो
योजितो
याने स्त्रीगृहवाहने च शयने शस्तो गृहे हस्ति-
नाम् ॥
ध्वाङ्क्षः शिल्पितपस्विनां हितकरस्तेषां मुखं
नामवत्
ध्वाङ्क्षः काकमुखो विडालवदनो धूमो ध्वजो
मानुषः ।

मूर्ध्नें पश्चिपदा हरेरिव गलो हस्तौ नरस्येव तु प्राच्याः खदिगताः क्रमेण पतयो स्वस्तौ च ते सम्मुखाः ॥*॥

देयाः सिंहगजध्वजादिवृषभे सिंहध्वजौ कुञ्जरे सिंहो वै ध्वज इष्यते न वृषभोऽन्यत्रापि देयो बुधैः ।
सिंहो हस्तिवृषालये न्तिकरस्थायस्य वक्ष्ये ग्रहं तस्मिन्नेव च·वामदक्षिणदिशाद्वारे स आयः शुभः ॥
यासि दैर्घ्यगुणेऽष्टभिर्विभजिते शेषो ध्वजाद्यायको-ऽष्टघ्ने तद्गुणिते च धिष्ण्यभजिते स्यादृक्षमश्वादिकम् ।
नक्षत्रे वसुभिर्व्ययोऽपि भजिते हीनस्तु लक्ष्मीप्रद-स्तुल्यायश्च पिशाचको ध्वजन्नति संवर्द्धितो राक्षसः ॥
तन्नाले व्ययहर्म्म्यनामसहिते भक्ते त्रिभिस्त्वंशकः स्यादिन्द्रोपमभूपतिक्रमदशाहेवे सुरेन्द्रो स्थितः ।
वेश्यामेव यमस्तु पुण्यभवने नागे तथा भैरवे राजांशो गजवाजियाननगरे राजालये मन्दिरे ॥*॥

यावद्गृहक्षं गणयेत् खधिष्ण्या-
त्ताराविभक्ते नवभिश्च शेषाः ।
बुधैस्तृतीया सकले विवर्ज्या
या पञ्चमी सप्तमिका न शस्ता ॥

धिष्ण्यानीह च सप्तशः क्रमतया वह्न्यस्तु पूर्व्वादितः स्युस्तानि भवन्ति यत्र गृहभं तत्रैव चन्द्रो भवेत् ।
हानिं पृष्ठगतः करोति पुरतस्त्वायुःक्षयं चन्द्रमाः पार्श्वे दक्षिणवामके शुभकरोऽस्ये देवभूपालये ॥
प्रीतिः स्यात्·समसप्तमी च दशमी चैकादशी शोभना दारिद्र्यं युगला करोति मरणं षष्ठी कलिः पञ्चमी ।
मेषोऽग्नित्रितये हरिस्तु पितृभाचापत्रये मूलतः शेषैः स्युर्नव राशयः परमतो नन्दांशकैस्ते पृथक् ॥
भौमो वृश्चिकमेषयोर्वृषतुले शुक्रस्य राशिद्वयं कन्या युग्मबुधस्य कर्कसदनं चन्द्रस्य सिंहो रवेः ।
जीवो मीनधनुःपतिर्मृगघटौ मन्दस्य गेहं स्मृतं मित्राण्यर्कशशीन्दुदेवगुरवोऽन्ये चारयस्ते मिथः ॥
देवर्क्षं श्रुतिपुष्यभेऽश्विभरणी मैत्रानिलं पौष्णभं हस्तादित्यमथोऽनुरत्नकविधौ पूर्व्वोत्तरा वह्निभम् ।
रक्षोमूलविशाखिकाग्निपितृभं चित्रा धनिष्ठा-द्वयं
ज्येष्ठाश्लेषमपीह दैत्यमनुजे न्मृत्युस्तु दैवे कलिः ॥
वैरं चोत्तरफल्गुनीयुगलयोः स्वातीभरण्यो-र्द्वयो रोहिण्युत्तरषाढ़योः श्रुतिपुनर्व्वस्वोर्विरोधं तथा ।
चित्राहस्तभयोश्च पुष्यफाल्गुनोर्ज्येष्ठाविशाखा-श्रयोः प्रासादे भवनासने च शयने नक्षत्रवैरं त्यजेत् ॥
विप्राः कर्कभषालिनो निगदिताः सिंहाजचापा नृपा विट्कन्या मकरो वृषोऽथ वृषला युग्मश्च कुम्भस्तुला ।
वर्णेनोत्तमकामिनी च भवनं वर्ण्यं बुधैर्यत्नतः श्रेष्ठा द्वादश नन्दराशगुणतो विप्रक्रमाद्राशयः ॥
अश्वोऽश्विनीशतभयोर्यमपुष्य हस्ती
छागोऽग्निपुष्य उरगोऽपि विशाखसौम्ये ।
मूलार्द्रयोः शुनक ओतुरहावदित्यै
पूर्व्वा मघासु मत उन्दुररेव योनिः ॥
गौर्भद्रोत्तरफल्गुनीत उदिता स्वातौ करे माहिषी
व्याघ्रास्त्वाद्विशाखयोश्च हरिणो ज्येष्ठानु-राधाभयोः ।
पूषाढ़श्रवणे कपिर्निगदितो वैश्वाभिजिन्नाकुलं पूभायां वसुभे न्मृगेन्द्र उदितो वैरं त्यजेल्लोकतः ॥

आयर्क्षतारा व्ययमंशकञ्च
क्षेकत्र हत्वा विभजेत् क्रमेण ।
तिथ्या च वारेण तथैव लग्नैः
शेषैस्तु भान्येव भवेयुरङ्कैः ॥
दैर्घ्यं पृथुत्वेन च ताडनीयं
तयोर्यदैक्यं पुनरष्टकृयेण ।
शेषेऽधिनाथो वसुभाजितेऽस्मिन्
समः प्रशस्तो विषमस्तु नैव ॥ * ॥

वर्गाष्टकस्य पतयो गरुड़ो बिड़ालः
सिंहस्तथैव शुनकोरगमूषकेणाः ।
मेढ़ाककारच-ट-ताः प-य-शाश्च वर्गा
यः पञ्चमः स रिपुरेव बुधैर्निवर्ज्यः ॥
अश्विन्यादिकभत्रयं पशिनिभं चक्रं त्रिनाड्य-ङ्कवं त्र्येकस्थौ वरकन्ययोश्च यदि भं तन्मृत्युदं चाशु तः॥
नाड़ीवेधकमित्रगेहपुरतस्त्र्येका शुभा सर्वथा आयादित्रिकपञ्चसप्तनवभिस्त्वङ्कैर्गृहं सौख्यदम् ।

गुणगणं लघुदोषसमन्वितं
भवनदेवगृहादिकमिष्यते ।
जललवेन शिखी बहुतापवा-
न शममेति गुणैरधिको यतः ॥"

इति श्रीसूत्रधारमण्डनविरचिते वास्तुशास्त्रे राजवल्लभे आयादिलक्षणं ३ अध्यायः ॥

"वापीकूपतड़ागदेवभवनान्यारामयागादिकं तीर्थानामवगाहनञ्च विधिवत् कन्याप्रदाना-दिकम् ।
सर्व्वं पुण्यमिदं नृपः स लभते यः कारयेत् पर्व्वते दुर्गं सर्व्वजनाय शर्म्मजननं विश्राममेकं परम् ।
सिंहो वैरिपराभवं प्रकुरुते तिष्ठन् गिरौ गह्वरे दुर्गस्थो नृपतिः प्रभूतकटकं शत्रुं जयेत् सङ्गरे ।
कैलासे नगरं शिवेन रचितं गौर्य्यादिमंरक्षणे दुर्गं पश्चिमसागरे च हरिणाप्येषां किमच्यो-च्यते ॥
भूदुर्गं जलदुर्गमद्रिविषये दुर्गं भवेद्गह्वरे तैषासुत्तममद्रिमूर्द्ध्नि रचितं नरैरिणां दुर्गमम् ।
अन्नाद्यैर्घृततोयतैललवणैः काष्ठैस्तृणाद्यैस्तथा यन्त्रोपस्करबाणशस्त्रसुभटैः संपूरयेद्भूमिपः ॥
माहेन्द्रं चतुरस्रमायतपुरं तत् सर्व्वतोभद्रकं वृत्तं सिंहविलोकनं सुवृत्तमायत्तं तथा वारुणम् ।
नन्दाख्यञ्च विसुक्तकोणमथ नन्दावर्त्तिस्वस्त्या-कृति प्रोक्तं तद्द्वयवज्रयन्त्रमपि तद्दिव्यं गिरेर्मस्तके ॥
पृथ्वं चार्द्धदलोपमञ्च पुरुषाकारं पुरं पौरुषं खेटं कुत्रचितु भूधरस्य कथितं दण्डाभिधं दैर्घ्य-कम् ।
शान्तं प्राक् सरिता परञ्च कमलं याम्ये नदी धार्म्मिकं द्वाभ्यां चैव महाजयञ्च धनदाशायां नदी सौम्यकम् ॥
दुर्गैकेन युतं श्रियाख्यनगरं द्वाभ्यां रिपुघ्नं पुरं त्वष्टास्रं कथयन्ति स्वस्तिकमिति प्रोक्ता गुणा विंशतिः ।
भूपानां सुखदा यशोऽर्थफलदाः कीर्त्तिप्रतापो-द्भवा लोकानाञ्च निवासतो विरचिताः प्राक्शम्भुना ते गुणाः ॥"

इति पुराणां विंशतिगुणाः ॥*॥

"वह्निभीतिकरं त्रिकोणनगरं षट्कोणकं क्षेशदं वक्रे वज्रभयञ्च शाकटपुरे रोगस्त्रिशूले कलिः ।
प्रोक्तं तस्करभीतये द्विविकटं कर्णाधिकेऽर्थक्षयो दोषाः सप्त भयावहाः प्रकटिता ये विश्वकर्म्मो-दिताः ॥"

इति पुराणां सप्त दोषाः ॥ * ॥

"वर्ण्योऽथो विविधं पुरं सुनिमतं मध्योत्तमं कन्यसं तेषां हस्तसहस्रमन्तिमपुरं मध्यं ततः साष्ट-कम् ।
ज्येष्ठं युग्मसहस्रमेषु चरमं भागाष्टकेनाचितं मध्यं द्वादशभागतः शशिकलं ज्येष्ठं विदध्यात् सुधीः ॥
मार्गाः सप्तदशैव चादिमपुरे हीनं चतुर्भिः पुरं प्रोक्तं कन्यसमेव मार्गनवभिर्दैर्घ्ये तथा विस्तरे ।
ग्रामश्चैव पुरार्द्धतो हि तदनु ग्रामार्द्धतः खेटकं खेटार्द्धेन तु कूटमेव विबुधैः प्रोक्तं ततः खर्व्व-टम् ॥
हस्तानाञ्च युगाष्टषोड़शसहस्रं भूपतीनां पुरं तन्मध्ये दशधा वदन्ति सुनयो हृद्या सहस्रेण तत् ।

आयामे वसुपादसार्द्धवसुतो भागः प्रशस्तोऽधिकस्त्वेकैकश्च चतुर्व्विधं निगदितं कार्य्यं समं कर्णयोः ॥

षट्त्रिंशतः षट् क्रमतो विहाय
देवे पुरे चत्वरके क्रमेण ।
यदृच्छया मानमुशन्ति केचित्
प्राकारकोष्ठस्य च भित्तिकायाः ॥*॥
पूर्व्वापरास्याः पुरसम्मुखाश्च
देवाः शुभा नोत्तरदक्षिणाश्च ।
भङ्गं पुरस्यापि पराङ्मुखास्ते
कुर्व्वन्ति धात्रर्कजनार्द्दनेशाः ॥

ब्रह्मा विष्णुशिवेन्दुभास्करगुहाः पूर्व्वापरास्याः शुभाः
प्रोक्तौ सर्व्वदिशामुखौ शिवजिनौ विष्णुर्विधाता तथा ।
चामुण्डा ग्रहमातरो धनपतिर्दैमातुरो भैरवो
देवा दक्षिणदिङ्मुखाः कपिवरो नैरृत्यवक्त्रो भवेत् ॥
मार्गाः सप्तदशाङ्कपञ्चशिखिनो युग्मं पुरात् खर्व्वटं
मार्गाः षोडश सूर्य्यविंशतिकराः कार्य्यास्त्रिधा विस्तरे ।
प्राकारोदयविंशहस्तमभितो द्वाभ्यां विहीनोऽधिको
व्यासार्द्धेन तदूर्द्धतश्च कपिशीर्षाण्यष्टमात्रान्तरम् ॥
प्राकारेऽपि च कोष्ठका दशकराः सूर्य्याङ्कहस्तास्तथा
प्रोक्तास्तेन समेव कोणसहिता विद्याधरी मध्यमा ।
तस्या वाथ सुरुङ्गके च विविधं युद्धासनं कारयेत्
प्राकारोदयतो विधाय परिखाविस्तार उक्तो बुधैः ॥

विद्याधरीकोष्ठकयोश्च मध्ये
बाहुप्रमाणं शररामहस्तम् ।
पञ्चाधिकं पञ्चकरेण हीन-
मिति त्रिधा वास्तुमतो हितञ्च ॥*॥
दुर्गोदयं नन्दकरप्रमाणं
तिथ्या समं सप्तदशैव केचित् ।
एकोनविंशं पृथुलं वयाणां
दिक्कालसूर्य्याष्टकरा वदन्ति ॥

ताम्बूलं फलदन्तगन्धकुसुमं मुक्तादिकं यद्भवेत्
राजद्वारसुराग्रतो हि सुधिया कार्य्यं पुरे सर्व्वतः ।
प्राक्विप्राश्च नृपा हि दक्षिणदिशि स्युः सौम्यतः शूद्रकाः
कर्त्तव्याः पुरमध्यतोऽपि वणिजो वेश्या विचित्रैर्गृहैः ॥
दैवे रङ्गकराः कुविन्दरजका वह्नौ च तन्त्रीविन्प्रोक्ता अन्त्यजचर्म्मकारवरटाः स्युः शौण्डिका राक्षसे ।
पण्यस्त्रीनिर्ऋतौ च मारुतयुते कोणे न्यसेल्लुब्धकान्
वापीकूपतडागकुण्डमखिलं तोयं तथा वारुणे ॥
सिंहद्वारचतुष्टयञ्च खटकीद्वाराणि चाष्टौ तथा
कर्त्तव्यानि दृढार्गलानि रुचिरैः कापाटकैः सुदृढैः ।
कीर्त्तिस्तम्भनृपालयामरगृहैर्हट्टैः सुधानिर्म्मितैर्हर्म्यैराश्रोपवनैर्जलाश्रययुतैः कार्य्यं पुरं शोभनम् ॥”

इति नगरप्रमाणम् ॥ * ॥

“यन्त्राः पुराणामथ रक्षणाय
संग्रामवज्राम्बुसमीरणाख्याः ।
विनिर्म्मितास्ते जयदा नृपाणां
भवन्ति पूज्याः सुरया च मांसैः ॥

हस्ता अष्ट च भैरवो नरकरश्चाक्षो दशाद्यो भवेद्रुद्रो भीमगणोऽपि भास्करकरैर्यन्त्रस्तु विश्वैः शिखी ।
प्रोक्तोऽसौ यमदण्ड एव मुनिभिस्तिथ्या महाभैरवो
ह्यष्टौ शङ्करनिर्म्मिताश्च समरे देवासुरे भैरवे ॥
यन्त्रे चाष्टकरेऽष्टहस्तफणिनीसूर्य्याङ्गुला विस्तरे
स्तम्भा मर्कटिका च पञ्जरमतः षट्त्रिंशहस्ता क्रमात् ।
यष्टा एकविभागतोऽपि रदनैस्तुल्योऽष्टमाचाङ्गुलैः
प्रोक्ता कुण्डलवज्ञवो च वहितो मध्यादशीत्यङ्गुलैः ॥

यष्टा दृढा मर्कटिका विदध्या-
ल्लोहस्य कीलेन च चर्म्मणापि ।
यन्त्रं प्रकुर्य्याद्दृढकाष्ठकञ्च
तन्त्रागया ज्योतिकया समेतम् ॥
कराङ्गुलैः पञ्जरकस्य दैर्घं
केषां मते हस्तमिते च यन्त्रे ।
याटौ कुलौ वह्निजलानिलाख्या-
स्ते लक्षणैः परिकल्पनीयाः ॥”

इति यन्त्राष्टकप्रमाणानि ॥ * ॥

“नीराश्रयं पुण्यवतां विधेयं
मध्ये पुरस्यापि तथैव बाह्ये ।
वाप्यश्चतस्रोऽपि तथैव कूपा-
श्चत्वारि कुण्डानि च षट् तडागाः ॥*॥

कूपाः श्रीमुखवैजयौ च तदनु प्रान्तस्तथा दुन्दुभिस्तस्मादेव मनोहरश्च परतः प्रोक्तस्तु चूडामणिः ।
दिग्भद्रो जयनन्दशङ्करमतो वेदादिहस्तैर्मिता
विश्वान्तैः क्रमवर्द्धितैश्च कथिता वेदादयः कूपिकाः ॥*॥

वापी च नन्देकमुखा त्रिकूटा
षट्कूटिका युग्ममुखा च भद्रा ।
जया त्रिवक्त्रा नवकूटयुक्ता-
श्चतुर्भिस्तु कूटैर्विजया मता सा ॥*॥
सरोऽर्द्धचन्द्रञ्च महासरश्च
वृत्तं चतुष्कोणकमेव भद्रम् ।
भद्रैः सुभद्रं परिघैकयुग्मं
वकस्थलैकद्वयमेव यस्मिन् ॥
ज्येष्ठं मितं दण्डसहस्रकैस्तु
मध्यं तदर्द्धेन ततः कनिष्ठम् ।
ज्येष्ठं करैः पञ्चशतानि दैर्घ-
स्तदर्द्धमध्यं तु ततः कनिष्ठम् ॥*॥
भद्राख्यकुण्डं चतुरस्रकञ्च
सुभद्रकं भद्रयुतं द्वितीयम् ।
नन्दाख्यकं स्यात् प्रतिभद्रयुक्तं
मध्ये सुभद्रं परिघं चतुर्थम् ॥
करादितो हस्तशतं प्रमाणं
द्वारैश्चतुर्भिः सहितानि कुर्य्यात्
मध्ये गवाक्षञ्च दिशो विभागे
कोणे चतुष्कास्वपि पट्टशालाः ॥*॥

गङ्गाद्या रवयो हरेश्च दशकं ब्रह्मा दशैकाधिका
दुर्गा भैरवमातृका गणपतिर्वह्निस्त्रिकं चण्डिका ।
दुर्व्वासा मुनिनारदस्तु सकला द्वारावती लीलिका
लोकाः पञ्च पितामहादिविबुधाः स्युर्मध्यभित्तौ सदा ॥

तस्योद्धृतः श्रीधरमाड्कस्य
संदर्शनात् पूर्व्वफलञ्च काश्याः ।
स्नानाच्च गङ्गाश्रवणस्य पुण्यं
श्रुतं भवेद्वेदिधिवद्विधिज्ञैः ॥
विधारितं जीवनमेव येन
तन्नोपदेशेन समं पृथिव्याम् ।
स षष्टिसंख्यं च सहस्रवर्षं
स्वर्लोकसौख्यान्यखिलानि भुङ्क्ते ॥

ग्रामे वाथ पुरे नरेन्द्रभवने तत्षोडशांशं भवेत्
मध्यात् पश्चिमदिक्समाश्रितमिदं दुर्गं भवेद्भूवशात् ।
द्वारं दक्षिणवामतश्च पुरतः कार्य्यास्त्रयश्चत्वराः
सर्व्वं वास्तुगृहादिवासरचना भूपेच्छया कारयेत् ॥”

इति सूत्रधारमण्डनविरचिते वास्तुशास्त्रे राजवल्लभे प्राकारयन्त्रवापीकूपतडागलक्षणम् ४ अध्यायः ॥ * ॥

“अथो नृपाणां भवनानि वक्ष्ये
त्रिकातपत्रावनिपालकस्य ।
शतञ्च हस्ताष्टसमन्वितञ्च
व्यासे गृहं चोत्तममेव तस्य ॥
ये द्वापरे भूमिभुजो बभूवु-
स्तेषां गृहं हस्तशतं द्विहीनम् ।
तस्मात् प्रभूमीश्वरको नृनाथ-
स्तदाधिकाशीतिकरं गृहं स्यात् ॥
सामन्तकलक्षद्वयमस्ति यस्य
प्रोक्तो महामण्डलिको नरेशः ।

अशीतिहस्तं द्विकरेण हीनं
कुर्याद्गृहं शोभनमेव तस्य ।
पञ्चायुतेशो नृपमण्डलीको
भवेद्गृहं तस्य कराष्टषष्टिः ।
सामन्तमुख्यो ह्ययुताधिपोऽसौ
तद्गेहमष्टेषु करप्रमाणम् ॥
तदेषु पञ्चांशदपि द्विहीनं
सामन्तसंज्ञोऽयुतनाथ एव ।
तथा कृतीयोऽपि ततो द्विहीनं
त्रिंशत्कराद्याधिकमेव गेहम् ॥
प्रोक्तः प्रवीणैश्चतुराशिकोऽसौ
ग्रामा हि यस्यैव सहस्रमेकम् ।
अष्टाधिकं विंशतिहस्तहर्म्यं
सिद्धैः समस्तानि यथोदितानि ॥
ग्रामाधिपा ये तु शताधिपाश्च
ते स्वल्पराष्ट्रा अपि सैनिकाश्च ।
तेषां गृहा अष्टदशाधिकैश्च
करैः समाना मुनिभिर्म्मताश्च ॥
भूपालकार्द्धेन च मन्त्रिगेहं
यथाधिकारेण भवन्ति हीनम् ।
आसाद्दशांशाधिकमेव दैर्घ्यं
कुर्यादथो पञ्चमभागमिष्टम् ॥
गृहं चतुर्हस्तमितं करादि-
वृद्ध्या द्विरामान्तमिति प्रमाणम् ।
ततः परं भूपतिमन्दिराणि
यावच्छतं चाष्टकरादियुक्तम् ॥
स्याद्भूमिरेका वसुहस्तगेहे
दशाभिवृद्ध्या द्वितया पुनश्च ।
प्रासाद एवामरभूपयोश्च
हर्म्याणि लोके मुनिनोदितानि॥

शालाया नवधा च पञ्चकरतो मानञ्च विष्काम्भकं
भित्तेरेव चतुर्दशाङ्गुलमितिर्यावत् सपादं करम् ।
आगारस्य तु षोड़शांशरहितोऽप्यर्द्धेन हीनोऽथवा
भित्तेर्मानमिदं त्रिधा विरचितं कार्य्यं यथायोगतः ॥
दैर्घ्ये चन्द्रकलाङ्गुलोत्तमशिला मध्याङ्गुलो नान्तिमा
व्यासे दिङ्नवभूभृदङ्गुलितरपि त्रिंशेन विस्तारतः ।
हस्तादेकिकरोदयं नवविधं पीठं गृहे सर्व्वतो
विप्रादे रसभूतवेदगुणकाः स्युः पीठके मेखलाः ॥
षष्ट्या वाथ शतार्द्धसप्ततियुतैर्व्यासस्य हस्ताङ्गुलै-
र्द्वारस्योदयको भवेच्च भवने मध्यः कनिष्ठोत्तमैः ।
दैर्घ्यार्द्धेन तु विस्तरः शशिकलाभागोऽधिकः सप्तते-
दैर्घ्यं त्र्यंशविहीनमर्द्धरहितं मध्यं कनिष्ठं क्रमात् ॥
ज्येष्ठा प्रतोली तिथिहस्तसंख्या
प्रोक्तोदये विश्वकरा च मध्या ।



कनिष्ठिका चन्द्रकरा क्रमेण
व्यासेऽष्ट सप्तैव च रामसंख्या ॥
वेश्मव्यासकलांशकैर्युगगुणैर्हस्तैस्त्रिसार्द्धैर्युतै-
र्हर्म्यास्य त्रिविधोदयः क्षितितलाद्यावच्च पट्टोर्द्धकम् ।
एकैकोऽपि पुनस्त्रिधा निगदितः सर्व्वे त एकादश
चेपाः षस्रवती नखाः शशिकला अष्टादशाद्यस्त्रिधा ॥
त्रिस्थाने युगपर्व्वता८४क्षितियुता शिष्टैकविंशान्विता
मध्योऽयं त्रिकरैस्तदंशसहितैः प्रोक्तः कनिष्ठस्त्रिधा । * ।
वृक्षं दुग्धविशुष्ककण्टकयुतं नीड़ैस्तु चैत्यद्रुमं
घोरं मारुतपातितञ्च भवने चिञ्चाविभीतं त्यजेत् ॥
शाकः शालमधूकसर्ज्जखदिरा रक्तासनाः शोभना ।
एकोऽसौ सरलोऽर्ज्जुनश्च पनसः श्रीपर्णिनी शिंशपा ।
हारिद्रः पिचुमर्द्दचन्दनतरुः पद्माख्यकस्तिन्दुकी
नैतेऽन्येन युता भवन्ति फलदाः शाकादयः शोभनाः ॥*॥
गेहोदयन्तु नवधा विभजेत् षड़ंशं
स्तम्भोर्द्धभागसमकं भरणं शिरश्च ।
कुम्भी त्युदुम्बरसमैकविभागतुल्या
पट्टश्च तत्त्रिकयुतोऽंशसमान एव ॥
शालालीन्द उदाहृतो हि विबुधैर्व्वाणेषु युग्मांशकः
सप्तांशेषु गुणैश्च नन्दपदतो वेदांशतुल्यस्तथा ।
कापाटं गृहदक्षिणे निगदितं वामे भवेदर्गला
दृष्ट्या निष्क्रमणं कृतं मुनिवरैर्द्वारेषु सर्व्वेषु यत् ॥
शालाजिनांशैर्मनुरेव मध्ये
चयो हयान्ते हयमस्य पार्श्वे ।
द्वारोत्तमाङ्गेन समानकर्णाः
शस्ता न शस्ता भवनाभिवक्राः ॥*॥
दीपालयो दक्षिणदिग्विभागे
सदा विधेयोऽर्गलया समानः ।
वामे च मध्ये न शुभाय गेहे
सुरालये वामदिशीष्टसिद्ध्यै ॥
द्वाराग्रे खटकोमुखे च तदधो द्वाः षोड़शांशाधिकं
सर्व्वं वा शुभमिच्छता च सततं कार्य्यन्तु पट्टादधः ।
तन्न्यूनं न शुभन्तुलातलगतं कुड्यौ तथा पृष्ठगं
काष्ठं पञ्चक एव नीतरहितं यन्मूलपूर्व्वोत्तरम् ॥
द्वारोर्द्ध यद्दारमस्य प्रमाणं
संकीर्णं वा शोभनं नाधिकं तत् ।
कृत्स्नद्वाराण्येव यानि पृथूनि
तेषां शीर्षाण्येकसूत्राणि कुर्य्यात् ॥
सर्व्वं द्वारं नीचमानं वनाधे
सद्मा ह्रस्वं तत् करोत्यर्थनाशम् ।



गेहाद्यं यत् पूर्व्ववास्तुस्वरूपं
तेषां भङ्गान्नैव सौख्यं कदाचित् ॥
द्वारव्यासदशांशतोऽधिकमिदं कार्य्यं गृहं दक्षिणे
तुल्यं हस्तिगृहञ्च वाजिभवनं तेनाधिकं वामतः ।
अष्टांशेऽथ नवांशके च वितथे तोये जयेन्द्रे हितं
द्वारं सौम्यगृहक्षते च कुसुमे भल्लाटके शस्यते ॥
प्राग्द्वाराष्टकमध्यतोऽपि न शुभं सूर्य्येशपर्ज्जन्यतो
याम्यायाञ्च यमाग्निपौष्णमपरे शेषासुरं पापकम् ।
सौम्यायामथ रोगनागगिरिजं त्याज्यं तथान्यच्छुभं
कोणद्वारमसौम्यकं न हि हितं प्रोक्तञ्च वातायने ॥
द्वारं विद्धमशोभनञ्च तरुणाकोणभ्रमस्तम्भकैः
कूपेनापि च मार्गदेवभवनैर्विद्धं तथा कीलकैः ।
उच्छ्रायाद्द्विगुणां विहाय पृथिवीं वेधो न भित्त्यन्तरे
प्राकारान्तरराजमार्गपरतो वेधो न कोणद्वय ॥
दैर्घ्यं सार्द्धशताङ्गुलञ्च दशभिर्हीनम् १४०।१३०।
१२०।१०० चतुर्द्धा त्रिधः
प्रोक्तं वाथ शतं त्वशीतिसहितं १८० युग्मं २००
नवत्या शतम् १९० ।
तद्वत् षोड़शभिः शतञ्च ११६ नवभिर्युक्तं तथाशीतिकम् ८९
द्वारं मत्स्यमतानुसारि दशकं योग्यं विधेयं बुधैः ॥*॥
स्वयमपि च कपाटोद्घाटनं वा पिधानं
भयदमधिकहीनं शाखयोर्व्वा विशाले ।
पुरुषयुवतिनाशस्तम्भशाखाविहीनं
भयदमखिलकाष्ठाग्रं यदाधःस्थितं स्यात् ॥
देवालयं वा भवनं मठञ्च
भानोः करैर्व्वायुभिरत्र भिन्नम् ।
तन्मूलभूमौ परिवर्ज्जनीया
छाया गता यस्य गृहस्य कल्पे ॥
नैको लघुर्व्वामदिशाविभागे
मध्ये द्विषट् दारुणवर्णगेहे ।
स्तम्भासनं हीनमपि क्षयाय
यदाधिकं रोगकरं तदा स्यात् ॥
स्तम्भोऽष्टास्रवृत्तभद्रसहितो रूपेण चालङ्कृतो
युक्तः पल्लवकैस्तथाभरणकं यत् पल्लवेनावृतम् ।
कुम्भी भद्रयुता कुमारसहितं शीर्षं तथा किन्नराः
पत्रञ्चेति गृहे न शोभनमिदं प्रासादके शस्यते ॥
स्तम्भो द्वयोर्मध्यगतो न शस्तो
शुभंकरौ पट्टयुगांशतो द्वौ ।
गृहे प्रशस्ताश्चतुरस्रकाष्ठ-
स्तम्भा न कन्देन विना प्रशस्ताः ॥
हानिस्तुलामध्यगता स्वनस्य
स्तम्भेभदन्तालयभित्तिमूलम् ।

संलग्नचत्वार्य्यपि चानये स्युः
स्तम्भासनं स्तम्भशिरस्च शीर्षम् ॥
उत्सेधार्द्धविनिर्गतं शरयुगांशेनाधिकं शस्यते
छाद्यं पङ्क्समानकं सुखकरं नाशाय निम्नोन्नतम् ।
मत् काकस्य च पञ्चवच्च कुमुदाभं स्वर्य्यकालां-
यकं
प्रालम्बच्च करालकञ्च विबुधैः प्रोक्तञ्च तत्
षड्विधम् ॥
भूम्यारोहणमूर्द्ध्वतस्तदुपरि प्रादक्षिणं शस्यते
द्वारं तूर्द्धभवञ्च भूमिरपरा हस्तार्कभागैः
क्रमात् ।
प्रासादे च मठे नरेन्द्रभवने शैलः शुभो नो
गृहे
तस्मिन् भित्तिषु वाह्यकास्तु शुभदाः प्राग्भूमि-
कुम्भ्यां तथा ॥*॥
पृष्ठे चाग्रानन्तरमेव वाह्यात्
गृहप्रवेशो न शुभङ्करोऽसौ ।
गृहस्य पृष्ठे यदि राजमार्ग-
स्तद्वादिभूमेर्न हि पृष्ठभीत्यम् ॥
जीर्णं गेहं भित्तिभग्नं विशीर्णं
मत् पातयं स्वर्णनागस्य दन्तैः ।
गोशृङ्गैर्व्वा शिल्पिना निश्चयेन
पूजां कृत्वा वास्तुदोषो न तस्य ॥
हर्म्यास्यापि समन्ततो गृहपतिर्दुहिं यदा-
}पीड्यते
सर्व्वाशासु विवर्द्धितञ्च फलदं दुष्टं नरेकञ्च च ।
प्राच्युत्तरैरपि वैरसुत्तरदिशाभागे मनस्तापकृत्
पश्चादर्थविनाशदक्षिणदिशि शत्रोर्भयं वर्द्धते ।
वामाङ्गे धनवस्त्रदेवभवनं धातुः श्रियो वाजिनो
नार्य्यस्त्वौषधिभोजनस्य भवनं स्याद्वाटिका
वामतः ।
वह्निर्गोजलदन्तिशस्त्रसदनं कोषो तथा दक्षिणे
स्नानं माहिषमाजमौर्णिकमिदं याम्याग्निमध्ये
शुभम् ॥
सुग्रीवे वरुणेऽसुरे गगवरे स्याद्वाटिकानां गृहं
ताःस्थे युद्धगृहञ्च नृत्यरमणं गान्धर्व्ववेदाश्रितम् ।
राज्ञो मातृगृहं गजेन्द्रजयके रुद्रे महिष्या
गृहं
सत्ये धर्म्मगृहं रवौ च वरगृहं प्रोक्तं जये
श्रीगृहम् ॥
ईशप्राच्योरन्तरे गर्भभाना-
सुद्गाणां वा स्थानमेवात्र कार्य्यम् ।
धान्यागारं स्यात्तथा प्राग्नकोणे
भट्टैरप्येवं शम्भुकोणे शिवाख्ये ॥
प्राक्पश्चिमे मारुतवह्निकोणे
प्रोक्ता प्रवीणैरपि नृत्यशाला ।
वर्च्चोगृहं रात्रिचरस्य कोणे
स्यात् पश्चिमे भोजनशालिका च ॥*॥
प्राक् शोभा नृपमन्दिरे च पुरतः स्थानं तथा
पुस्तकं
वामाङ्गे नृपतेस्तथायुधधराः छत्रातपत्राणि
च ।
छत्रं चामरतापसाः स्वगुरवस्ताम्बूलभृद्दक्षिणे
गेहाधीशयदृच्छया च शयनं सर्व्वासु भूमीषु
च ॥
विवस्वदाख्ये शयनं प्रशस्तं
वादित्रगेहं सवितुर्व्विधेयम् ।
पूषाश्रितं भोजनमन्दिरञ्च
महानसं वह्निदिशाविभागे ॥
माहेन्द्राख्ये गोपुरं द्वित्रिभूमिं
भागोः संख्या तस्य मध्ये विधेया ।
उक्तानुक्तं मन्दिरादौ निवेशे
त्वष्टा कार्य्यं चाज्ञया भूपतीनाम् ॥
दिक्शालान्तं त्वेकशालादिगेहं
ज्येष्ठा मध्या कन्यसा दक्षिणाङ्गात् ।
शाला कार्य्या लोकगेहे युगान्तात्
त्रिद्व्येकाः स्युर्भूमयस्तेषु नूनम् ॥"
इति श्रीसूत्रधारमण्डनविरचिते वास्तुशास्त्रे
राजवल्लभे राजगृहनिवेशादिलक्षणं ५ अः ॥*॥
"अथैकशालं द्विगुणात्त्रिशालं
प्रस्तारतो लक्षणमेव तेषाम् ।
यथोदितं वास्तुमते तथैव
ब्रवीमि राज्ञामथ मानवानाम् ॥
चत्वारो गुरवस्तु पूर्व्वगुरुतोऽधो ह्रस्वतोऽन्ये
समाः
भूयः पश्चिमपूरितञ्च गुरुभिर्यावल्लघुत्वं भवेत् ।
उद्दिष्टे द्विगुणाङ्कनैर्लघुभवैः संख्यैकमिश्रीकृते
नष्टे स्तो विषमे समे गुरुलघू रूपे नदर्द्धीकृतः ॥
स्थाने लघोः सन्मुखवारलिन्दं
प्रदक्षिणं तं क्रमतो विदध्यात् ।
प्रस्तारतः षोड़शकं गृहाणां
प्रोक्तं तथाख्यां कथयामि तेषाम् ॥*॥
ध्रुवञ्च धान्यं जयनन्दसंज्ञे
खराख्यकान्तञ्च मनोरमाख्यम् ।
सुवक्त्रमस्मात् किल दुर्मुखाख्यं
क्रूरं विपक्षं धनदं क्षयञ्च ॥
आक्रन्दकं विपुलविजयञ्च
फलानि नाम्ना सदृशानि तेषाम् ।
इति ध्रुवादिषोड़शगृहाणि ॥*॥
धान्यादितोऽष्टौ विजयान्तकं हि
त्वलिन्दयुग्मं सुखतो विदध्यात् ॥
रम्यं श्रीधरमोदिते च परतस्तद्वर्द्धमानं गृहं
कारालञ्च सुनाभमेव तदनु धाक्षं सन्दुं तथा ।
इति रम्याष्टकम् ॥*॥
सर्व्वाणि ध्रुवबद्भवन्ति नियतं षड्दारुकैः सुन्दरं
प्रोक्तं तद्वदनुञ्च भद्रकसुदेऽथो वैसुखाख्यं शिवम् ॥
तत्सर्व्वलाभञ्च विशालसंज्ञं
तथा विलक्षं त्वशुभं ध्वजञ्च ।
उन्नतमेवं त्वथ भीषणञ्च
सौम्याजिते स्तः कुलनन्दनञ्च ॥"
इति सुन्दरादिषोड़शगृहाणि ॥*॥
"पूर्व्वालिन्दसमस्तकेषु युगलं पङ्क्त्य शालान्तरे
हंसञ्चैव सुलक्षणञ्च परतः सौम्यं ह्ययं भावुकम् ।
तस्मादुत्तमरौषिरे च सततं क्षेमं तथा क्षेपकं
चोद्वृत्तं वृषसुस्थितञ्च वयमानन्दं सुनन्दं
क्रमात् ॥"
इति हंसादिषोड़शगृहाणि ॥*॥
"अध्येऽपवर्गं ध्रुवकल्पकाणा-
मलङ्कृताङ्कं प्रथमञ्च तत्र ।
तथाप्यलङ्कारमिति क्रमेण
ख्यातं तदन्यं रमणञ्च पूर्व्वम् ॥
तन्निश्चरं तदनु पुण्यमनः सुगर्भं
प्रोक्तं गृहं कलषदुर्गतमेव रिक्तम् ।
स्याद्दीप्तितं तदनु भद्रकवर्द्धिते च
दीनं गृहं विभवकामदमेव संख्या ॥"
इत्यलङ्कृतादिषोड़शगृहाणि ॥*॥
"षड्दारु सर्व्वेष्वपवर्गकेषु
प्रभावसंज्ञं त्वथ भावितञ्च ।
सवर्म्मं तथान्यत्तिलकञ्च तत्र
सत् क्रीड़नं सौख्यमतो यशोदम् ॥
कुमुदमपि च कालं भासुरं भूषणञ्च
वसुधरमथ गेहं धान्यनाशं तदन्यत् ।
कुपितमपि च वित्तं वृद्धिदं प्रोक्तमेत-
त्तदनु कुलसन्दहं षोड़शं प्रोक्तमाद्यैः ॥"
इति प्रभवादिषोड़शगृहाणि ।*॥
"सर्व्वे सुखालिन्दसमन्विताश्च
द्वारद्विषट्कं त्वपवर्गमध्ये ।
ततश्च चूड़ामणिकं प्रभद्रं
क्षेमं तथा शेषसमुच्छ्रितञ्च ॥
विशालसंज्ञं त्वथ भूतिदञ्च
सुष्टं विरोधं कथितं क्रमेण ।
तत्कालपाशं हि निरामयन्तु
सुशालरौद्रं मुनिसम्मताश्च ॥
वैद्यं गृहं चैव मनोरमञ्च
सुभद्रसंज्ञं कथिता च संख्या ।
इत्येकशालानि गृहाणि विद्या-
च्छत्तञ्च चत्वार्य्यधिकं ध्रुवादि ॥
अपवरकं यत् कथितं तद्वामे धीमता गृहे
कार्य्यम् ।
यत् षड्दारुकमुदितं ज्ञेया सा पङ्क्ता श्रेणी ॥"
इति चूड़ामण्यादिषोड़शगृहाणि । इति चतु-
र्द्धतरं शतमेकशालगृहाणि ॥*॥
"अथ द्विशालालयलक्षणानि
पदैर्द्विभिः कोष्ठकरन्ध्रसंख्या ।
तन्मध्यकोष्ठं परिहृत्य युग्मं
शालाश्चतस्रो हि भवन्ति दिक्षु ॥
याम्याग्निगा च करिणी धनदाभिवक्त्रा
पूर्व्वानना च महिषी पितृवारुणस्था ।
गावी यमाभिवदनापि च रोगसौम्ये
च्छागी महेन्द्रशिवयोर्व्वरुणाभिवक्त्रा ॥
हस्तिन्या महिषी द्विशालभवनं सिद्धार्थकं
तच्छुभं
गावी माहिषसंज्ञकं क्षतिकरं तद्यामसूर्य्यं
भवेत् ।
दण्डं छागगवान्वितं धनहरं हस्तिन्यजाभ्यां
तथा

कार्यं गोकरिणीयुतं न हि शुभं पुत्री च पूर्व्वा-
परम् ॥

नामान्यतः सम्प्रवदामि तच्च
स्याद्वर्द्धमानं त्वथ कुक्कुटाख्यम् ।
हर्म्यादितो नाम चतुष्टयञ्च
हर्म्यं द्विशालं प्रथमं तथैव ॥
यत् स्वस्तिकं तद्रसदारुमध्ये-
ऽलिन्दस्तथाग्रे कथितं द्विशालम् ।
हंसाख्यकं स्यादथ वर्द्धमानं
कीर्त्तिविनाशं भवनं चतुर्थम् ॥
अलिन्दयुग्मं पुरतो विदध्यात्
षड्दारु मध्येऽपि च शान्तसंज्ञम् ।
तस्माद्गृहे हर्म्यगवैपुले च
तथा चतुर्थं कथितं करालम् ॥
तस्मिन् गृहे दक्षिणतो ह्यलिन्दे
वित्तञ्च नित्यं धनकालदण्डे ।
वामे पुनर्बन्धुदपुत्रदं स्यात्
सर्व्वन्तु तस्मिन्नपि कालचक्रम् ॥
लघुस्त पश्चात् पुरतोऽपि युग्मं
स्याद्दक्षिणैको रसदारुमध्ये ।
तन्नूपुरं सुन्दरमेव नीलं
स्यात् कौटिलञ्चैव यथा क्रमेण ॥
प्रदक्षिणैकः पुरतोऽपि युग्मं
षट्कं गृहान्तः किल शान्तदाख्यम् ।
ततो द्वितीयं खलु शान्तदं स्या-
च्छीलं तथा कोटरमेव संज्ञम् ॥
सौम्यं गृहं मण्डपसंयुतञ्च
तत्तुल्यरूपं विबुधैर्व्विधेयम् ।
सुभद्रमस्मादपि वर्द्धमानं
क्रूरञ्च सर्व्वस्वशुभं चतुर्थम् ॥
मुखे चयं दक्षिणपश्चिमैकः
षड्दारुकं श्रीधरनामधेयम् ।
प्रोक्ते गृहे कामदपुष्टिदे च
चतुर्थकं कीर्त्तिविनाशमेव ॥
वामे तथा दक्षिणपश्चिमैको
युग्मं मुखे मण्डपमग्रतश्च ।
श्रीभूषणं श्रीवसनं ततश्च
श्रीशोभकीर्त्तिक्षयमेव तद्वत् ॥
एकोऽपरे दक्षिणवामतश्च
मध्यस्थगं श्रीधरयुग्मपूर्व्वम् ।
सर्व्वार्थदं स्यात्सुखतस्त्रयश्चेत्
लक्ष्मीनिवासं कुपितञ्च नाम्ना ॥
युग्मं मुखे मण्डपमेव चाग्रे
युग्मं तथा दक्षिणतोऽन्तभित्तिः ।
पृष्ठे तु उद्योतकवाहुतेजः
सुतेज एवं कलहावहं स्यात् ॥
उद्योतके पश्चिमभागतो द्वौ
कुर्य्यात् द्विशालञ्च वह्निनिवासम् ।
तत् पुष्टिदं कोपसमागमन्य-
मशुभषट्कं क्रमतो विधेयम् ।
लघुत्रिकं पूर्व्वदिशाविभागे
एको भवेद्दक्षिणवामपश्चात् ।

महान्तमेतन्महितञ्च दद्यं
कुलत्रयं मण्डपसंयुतं स्यात् ॥
भ्रमद्वयं दिक्त्रितये विभागे
मुखे त्रिकं मण्डपमग्रतश्च ।
प्रतापवर्द्धन्यमिदञ्च दिव्यं
सुखाधिकं सौख्यहरं चतुर्थम् ॥
तस्यैव रूपं रसदारुयुग्मं
पुनस्त्वलिन्दोऽजगजन्ततश्च ।
स्यात् सिंहनादं त्वथ हस्तियानं
ज्ञेयं तथा कण्टकमेतदन्त्यम् ॥
शान्तादिगेहानि च षोड़शैव
द्विशालकानीह यथाक्रमेण ।
नामानि चत्वार्य्यपि रूपमेकं
हर्म्यादिभेदैः क्रमतो विधेयम् ॥”

इति सूत्रधारमण्डनविरचिते वास्तुशास्त्रे राज-
वल्लभे एकद्विशालगृहलक्षणं ६ अध्यायः ॥*॥

“द्विशालगेहानि तु षोड़शैव
वास्तुदधेः सारतरं पुनश्च ।
वक्ष्याम्यलिन्दोऽपि षणो लघुश्च
द्वौ निन्दुकाख्यौ कथितावलिन्दौ ॥
सूर्य्यं द्विशालं लघुरस्य वामे
मुखे त्रिकं दक्षिणतस्तथैकः ।
मुखे तथा वासवमेव गेहं
वामेऽपसर्गे लघुरेक एव ॥
प्रासादसंज्ञं सुखतस्त्रयश्चेत्
प्रदक्षिणं निन्दुकवेष्टितं स्यात् ।
अलिन्दयुक्तं विमलं द्विशालं
तद्दीर्घ्यवज्ञं सह मण्डपेन ॥
अथ द्विशालेषु समस्तकेषु
मध्ये विदध्याद्रसदारु चैकम् ।
तदा भवेद्भासुरमग्रयुग्म-
मेको लघुर्दक्षिणदिग्विभागे ॥
एको लघुर्दक्षिणपूर्व्वगः स्यात्
तद्वन्द्वभाक्तं सुखमण्डपेन ।
द्वौ पूर्व्वतो दक्षिणतस्तथैको
युग्मं भवेन्मण्डपगं सुतेजः ॥
मुखे गुणा दक्षिणतस्तथैको
द्वौ मण्डपेऽस्मिन् हयजाभिधानम् ।
महान्तगेहं सुखजे त्रिके तु
युग्मान्वितं मण्डपमेतदेव ।
मुखे तथा मण्डपके च युग्मं
वामेऽपसव्ये युगलं लघोश्च ।
लोकत्रयाड़म्बरमस्य नाम
षड़क्षरं शम्भुगणैः प्रयोज्य ॥
युग्मं मुखे मण्डपगं द्वयं स्या-
त्तथा द्वयं दक्षिणवामतश्च ।
एको हि पश्चाद्वरदाभिधानं
श्रीविश्वकर्म्मोक्तमतो द्विशालम् ॥
मालीनषंज्ञं सुखगैश्चतुर्भि-
र्युग्मं भवेद्दक्षिणवामभागे ।
युग्मं तथा पश्चिमदिग्विभागे
तस्याग्रतो मण्डप एक एव ॥

प्राग्रामा तपश्री विलासभवने वामे लघुर्दक्षिणे
तत्रैकमण्डलसंयुतञ्च कमलं स्याद्वृद्धिदं सौख्य-
दम् ।
वेदास्त्वुदरके मुखे च सततं वामेतथा दक्षिणे
तस्याग्रे सुखमण्डपस्य फलदानेवं गृहान्
षोड़श ॥”

इति सूर्य्यादिषोड़शगृहाणि ॥*॥

“अथ त्रिशालं त्रिदशैश्चयैकं
स्यात्त्रैदशावासमरूपसंज्ञम् ।
तथा चतुर्थं कुमुदाभिधानं
हर्म्यादिभेदैः क्रमतो विधेयम् ॥
छत्रं ह्यलिन्दश्च तथैव पुत्रं
हरञ्च कामन्त्वथ हृस्वभद्रम् ।
षट्कश्च मध्ये स्वधनं कुबेरं
पद्मं तथा कामदमेतदेव ॥
अलिन्दयुग्मं त्वथ भद्रयुक्तं
मध्ये कपाटं जलजाभिधानम् ।
स्यान्मित्रजं चैव गजं कृपञ्च
षड्दारु मध्ये सकले यथातः ॥
स्याद्वैजयं मण्डपहृस्वभद्रं
जयं निनादं त्वथ कीर्त्तिजञ्च ।
भद्रोनहृस्वाधिकसाकलाङ्कं
निर्लोभकं वासदकौशले च ॥
त्रैरङ्कं क्रमाद्दौश्वरवारदाख्यं
भौमञ्च कौशल्यमतः क्रमेण ।
तद्वद् वृद्धस्वभनं तृतीयं
स्यात् कौशलं नीलमिदं चतुर्थम् ॥
मुखगुणलघुवामे दक्षिणे चैक एत-
द्वरदशरदसुक्तं दण्डकं काकपक्षम् ।
इदमिह हि निनादं मण्डपेनाधिकं स्या-
त्तदनु च गजनादं वाहुलं कीर्त्तिजाख्यम् ॥
स्वस्त्यादिरूपसुखमण्डपमेव सिंहं
श्रेये गृहे वृषगजे अपि कोषसंज्ञम् ।
वामेऽधिकञ्च लघुना कथितं सुभद्रं
स्यात्मार्गिणभद्रमपि रत्नकाञ्चनाख्यं ॥
युगसुखमपरैको भैरवं दक्षिणे च
भरत नरजमेतत् स्याच्चतुर्थं कुबेरम् ।
पुनरपि लघु वामे हस्तियानं वियानं
हयजन्नपनगेहं तच्चतुर्थं क्रमेण ॥
वर्णीतं सुभद्रञ्च सागरगृहं पञ्चैव कृत्वा मुखे
प्रोक्तं चौरदरत्नदाक्षयमिदं कोलाहलञ्चापरम् ।
षड्दारुद्वयभद्रसमलघवस्तिर्य्यक् युतं शालया
गान्धर्व्वं क्षितिभूषणञ्च कथितं सर्व्वाङ्गकं दर्प-
कम् ॥
धान्यं वृद्धिकरं त्रिशालमुदितं शाला विना
पावनी
प्राक्शाला रहितं शुभं निगदितं सुपक्षमर्थ-
प्रदम् ।
पुत्रीसंज्ञमिदं करोति मरणं हीनं तथा
याम्यया
पञ्चाग्नं महिषीन्दते च भवनं तत्पुत्रबन्धुक्षयम् ॥”

इति त्रिदशादिषोड़शगृहाणि ॥*॥

"त्रिशालानि च षोडश प्रथमतः षोमश्च षड्-
दारुकं
तच्चैकेन पुरोऽपि शङ्करमिदं मध्ये क्रमात्
पूर्व्ववत्।
वर्द्दे द्वौ मुखतोऽपि दक्षिणलघुश्चैकाधिकं
सागरं
चत्वारो नृपशोभितश्च पुरतः प्राग्दक्षिणैको
लघुः ॥
पश्चाग्रे सकलं श्रमश्च लघुना सर्व्वस्य तत्
सौख्यदं
रागाख्यं श्रमसंयुतश्च भवनं तत् सर्व्वशालं
भवेत्।
प्राग्वामाङ्कुलनन्दनं क्रमतया त्वेकद्वयेकान्वितं
तस्मिन्दक्षिणसंयुते च लघुके कल्याणसंज्ञं तथा॥
सर्व्वाशासु लघुत्रयं शरमुखं तत् पट्टयुग्मं
क्रमात्
तत्सौभाग्यविवर्द्धनञ्च भवनं राज्ञां सदा निर्म्मि-
तम्।
आनन्दं मुखराजिदक्षिणलघुर्व्वामे च पृष्ठे द्वयं
रागास्यं जनशोभनं गुणगणैकेनान्वितं स्थितः॥
श्वाशोवर्द्धनमग्रतो रसयुतं युग्मायिनेत्रैः क्रमात्
सप्राग्रे त्रिगुणं त्रिकञ्च लघवो लोकत्रिकं
सुन्दरम्।
गेहं श्रीतिलकं च भद्रसहितं हस्तेन हीनं मुखे
तद्युक्तं लघुना च भद्रसहितं विष्णुप्रियं
भूपतेः॥"
इति सोमादिषोड़शगृहाणि ॥*॥
"षड्दारुकं श्रीचिदशं त्रिशालं
तत् श्रीनिवासं सुखहस्तयुक्तम्।
श्रीवत्सतः श्रीधरमेव दृष्ट्वा
श्रीभूषणं वेदमुखञ्च गेहम्॥
वासैः श्रीजयमग्रतोऽपि ऋतुभिः श्रीतैलिकं
मन्दिरं
रागाग्रं रसदारुयुग्मसहितं तत् श्रीविलासं
भवेत्।
श्रीतेजोजयमग्रतश्च मुनिभिः षड्दारु युग्मान्वितं
सोमादित्रिदशादिभूपतिगृहाः पञ्चाधिका
विंशतिः॥"
इति त्रिदशादिनवगृहाणि ॥*॥
"भवननवकमुक्तं यच्चतुःशालमध्यात्
नयनलवमुखं स्याद्दक्षिणैकेन चन्द्रम्।
भवति सदनमध्ये सर्व्वतो दारुषट्कं
द्वितयमपि च तेषामन्तिमं युग्मयुक्तम्॥
मलयमथ च गेहं वामहस्ताधिकं स्यात्
भवति च गुणहस्तं शोभनं पूर्व्वतोऽपि।
त्रिभिरपि च मुकर्णा पृष्ठयाम्ये तथैक-
स्तदधिकमपि वामे वेश्म नागेन्द्रसंज्ञम्।
चक्रं चतुष्टयमुखं सकलेषु शस्तं
याम्योत्तरे हि लवुनापि जयावहं स्यात्।
भद्राक्षयञ्च मकराक्षयमेव तस्मिन्
पृष्ठाग्रहस्तमपि कामदमग्रभद्रम्॥"
इति विजयादिनवचतुःशालगृहाणि ॥*॥



"शुद्धादयो मुनिमतेऽष्टविधा च शाला-
स्तासां षडेव कथिता भवनप्रबन्धे।
शालालिमध्यरचितोऽपि लघुः सुखाय
यदा तदग्ररचिताः पृथगेव शालाः॥"
इति सूत्रधारमण्डनविरचिते वास्तुशास्त्रे राज-
वल्लभे द्विशालत्रिशालचतुःशालगृहलक्षणवर्णनं
सप्तमोऽध्यायः ॥ * ॥
"शयनमथ नृपाणां त्वङ्गुलानां शतैकं
नवतिरपि सुतानां मन्त्रिणः षड्विहीनम्।
बलपतिगुणहस्तं त्र्यङ्गुलोनं गुरोश्च
तदनु युगलहीनं ब्राह्मणादेः प्रशस्तम्॥
यामोर्द्धभागे नतदैर्घ्यतश्च
कलांशमात्रोऽधिक एव शस्तः।
त्र्यंशेन पादेन समुच्छ्रयः स्यात्
द्विग्न्यङ्गुलानामधिको न कार्य्यः॥
श्रीपर्णी धनदासनोऽपि गदहा वित्तप्रदा तिन्दुकी
वृद्धिः शिंशपयाथ शाकशयने शर्म्मापि शालैः
शते।
आयुः पद्मकजे च चन्दनमये शत्रुक्षयः स्यात्
सुखं
श्रेष्ठं चैकमलं शिरीषजनितं पर्य्यङ्कयाना-
सनम्॥"
इति शयनम् ॥ * ॥
"सिंहासनं चोत्तममङ्गुलानां
षष्ट्या दशोनञ्च परं तथैव।
दशांशवस्वंशमनो विहीनं
व्यासे च दैर्घ्यार्द्धसमुच्छ्रयः स्यात्॥
मुनिभिरथ शिवैर्व्वा भद्रभागत्रयं स्या-
दुदय इति विभागैर्भाजिते पीठमष्टौ।
कनकमपि रसांशं सप्तधा ग्रासपट्टी
शिवनवमुनिरत्नैर्दन्तिवाहौ निवेद्यौ॥
छाद्यं स्याद्रसभागमेव लिखितो भागेन कक्षासनं
युक्तं स्तम्भयुगेन तोरणयुतं रत्नैः शुभे राजि-
तम्।
कर्त्तव्यं नृपवल्लभं मतिमता ज्येष्ठञ्च सिंहासनं
ख्यातञ्च यशोऽभिवर्द्धनमिभैः सिंहैर्नृकच्छा-
सनम्॥
नरैस्तु वेदी पुनरेव छाद्यं
सुखासनं तोरणसंयुतं स्यात्।
पीठञ्च कुम्भः कलशं विटङ्क-
मुत्तङ्गसंज्ञं सह छाद्यकेन॥
पीठे गोहरिवेदिके च सुयशश्छाद्येन सिंहासनं
हस्ती मातृकवेदिकासनयुतं तद्दीपचित्रं भवेत्।
छत्रं ज्येष्ठमशीतिवेदसहितं द्वासप्ततिर्मध्यमं
षष्ट्या कन्यसमङ्गुलैर्नरपतेर्दैवं शताङ्कं शुभम्॥"
इति सिंहासनच्छत्रलक्षणानि ॥ * ॥
"वातायनो लुम्बिकया विहीनो
बुधैरुदीर्णाक्षिपताक एव।
द्विलुम्बिकश्चोभयसंज्ञकश्च
यः स्वस्तिकोऽसौ युगलुम्बियुक्तः॥
स्याद्वाभैः प्रियवक्त्र एव सुमुखः षड्भिः पुन-
श्चेति च



छाद्यैकेन युतः सुवक्त्र उदितो द्वाभ्यां प्रियङ्गो
भवेत्।
एकोनः परिपद्मनाभ उदितस्तद्दीपचित्रो युगै-
र्व्वेचित्रः शरपङ्क्तिभिस्तु विविधाकारैर्युतः
पञ्च च॥
सिंहो दैर्घ्यविवर्द्धितो हि पृथुले हंसो गवाक्षो
भवेत्
कुम्भोऽसौ मतिदोऽपि भद्रसहितो शेषस्तु
शुद्धार्णवः।
द्वारेणैव युगाङ्कसङ्ख्यया गवाक्षः पञ्चद्वये जालकं
प्रोक्ताः पञ्चदशैव रूपमदना वेद्यादिकच्छा-
सनैः॥"
इति पञ्चदश गवाक्षाः ॥ * ॥
"सभा च नन्दा परतोऽथ भद्रा
जया च पूर्णा क्रमतोऽपि दिव्या।
पद्मी सुरश्चोऽधिकोत्पलाष्टौ
बुधैर्व्विधेयावनिपालगेहे॥
शिवं चतुष्टयपदैरपि षोड़शांशं
मध्ये तुरीयपदमेकपदो लघुश्च।
नन्देति भद्रसहिता च पदेन भद्रा
तद्वेदतश्च जयदा लघुना च पूर्णा॥
दिव्या सभा केवलनन्दभागा
भद्रैश्चतुर्भिः सहिता च पद्मी।
रत्नोद्भवा स्याद्युगतोऽपि तुर्य्ये-
स्तथोत्पलाख्या प्रतिभद्रतश्च॥
स्तम्भैस्तोरणराजितैश्च मदला नियूंहवेतालके-
लूर्च्छाद्यैर्गजसिंहराजविविधैर्नृत्यान्वितैः
शोभितम्।
रत्नस्फाटिकरत्नभूमिनृपतेः क्रीड़ास्पदं मण्डपं
कुर्य्याद्दक्षिणभद्रके च रुचिरां यन्मध्यतो वेदि-
काम्॥"
इति सभाष्टकम् ॥*॥
"वेदी कोणचतुष्टयेन सकले पार्श्वद्वये स्वस्तिका
कल्याणं रविकोणकैश्च नृपतेः सा भद्रिका
सर्व्वदा।
कोणैः श्रीधरिका च विंशतिमितैस्त्रिंशोऽम-
राणां गृहे
कोणैरष्टभिरन्विता च शुभदा चक्रार्द्धने
पद्मिनी॥
विप्रे सप्तकराश्च भूपभवने षट्पञ्च वैश्ये तथा
कुर्य्याद्धस्तचतुष्टयाश्च वृषले चिह्नाङ्कतो हीनके।
तस्योर्द्धे च नरम्बरासनमतो माञ्चं चतुस्तम्भकं
हेम्ना मौक्तिकपट्टकूलमणिभिः सौम्याननं
राजितम्॥"
इति वेदिकाचतुष्टयम् ॥*॥
"दीपस्तम्भं त्रिकरमुदये षड्भिरूनं क्रमेण
हस्तान्तं तं विहितमपि तैः पीठकुम्भान्वितञ्च।
दीपस्योर्द्धे कनककलशं शोभितं कङ्कणाद्यैः
कुर्य्याद्द्वातोरण तदमतो नागवल्ले विवर्ज्ये॥"
इति श्रीसूत्रधारमण्डनविरचिते वास्तुशास्त्रे
राजवल्लभे शयनसिंहासनच्छत्रगवाक्षसभा-
ष्टकवेदिकाचतुष्टयदीपस्तम्भलक्षणं ८ अध्यायः।

"गृहा वास्तुशास्त्रोदिता राजयोग्या
अनन्ता हि सन्त्यत्र तेभ्यः कियन्तः।
मयोक्ताश्च योग्या नृपाणां समन्तैः
सुशोभान्विताश्चैव कल्याणदाश्च॥
विशालं गृहं दिक्त्रये हस्तयुग्मं
मुखे वीथिकाग्रे च मण्डपं दारुमध्यम्।
गृहालिन्दचातुर्दिशं चैकवक्त्रं
गवाक्षश्च कोणे च भद्रे विधेयम्॥
मुखे भद्रके श्रीधरं मात्तयुक्तं
तथा भूमिका पञ्चसप्तैकभूम्याम्।
विमानच्छादनं मण्डपं वेदवक्त्रे
रिपुघ्नं गृहं राज्यवर्द्धनमेतत्॥
मध्ये निम्नश्च शृङ्गाग्रं तथोच्चैः
प्रशस्तं देवे पुत्रलाभाय गेहम्।
स्तम्भश्रेणी मध्यमानेन कार्या
न्यूनाधिक्ये नैव पूज्या न च श्रीः॥
हीनस्तम्भे शालयोर्भित्तिपट्टे
यो वेधः स्यादन्यतो वेध एव।
भूमेर्भागं वह्निसंख्याप्रमाणां
तुल्या नेष्टा वर्द्धमानाः शुभाः स्युः॥
सार्द्धत्रयेण विभजेत् करतत्त्वसंख्या-
मध्ये नवांशसुदितश्च करार्द्धभित्तिः।
स्तम्भाश्च षोडशशतेऽपि च भद्रकेषु
दन्तैर्मिताश्च सकलासु चतुर्मुखं स्यात्॥
भद्रे च भूमिद्वयमर्द्धमात्तं
सार्द्धत्रिभूमं कथितश्च गेहम्।
प्रतापवर्द्धन्यमिदं नृपाणां
लक्ष्मीविलासश्च वदामि तस्मात्॥
स्तम्भा दश दश भद्रचैकं
षोडशमध्ये तत्समरूपम्।
मदनशरावनिमात्तसमेतं
लक्ष्मीः कर्म्म करोति च नित्यम्॥
भागाः पञ्चगुणाश्च पञ्च भवनं षड्विंशता स्तम्भकैः
कुर्य्यात् सार्द्धपदे च नन्दपदकैर्भद्रं चतुर्द्वारकैः।
भद्रे वै गुणभद्रकाणि सकलेऽष्टाशीतिका स्तम्भका
मात्तं भूत्रितये च सार्द्धशरभूः स्यात्क्रीनिवासं गृहम्॥
मध्ये स्तम्भशतश्च भागसमके भित्तिश्चतुर्द्वारकं
सप्तांशादिशरांशरामसहितं भद्रं चतुस्त्रिंशता।
षट्त्रिंशत् द्विशती च ते तु सकलाः स्तम्भाः स्थितौ पूर्व्वतो
नाम्ना तत् कमलोद्भवश्च कथितं भूम्यर्द्धसप्तान्वितम्॥
हर्म्यस्योदयकं विभज्य नवधा कुम्भो भवेद्भागतः
पादोनं भरणं शिरश्च कथितं पट्टः सपादो भवेत्।
स्तम्भः पञ्चपदोनभाग उदितः कोणाष्टहस्तस्तथा
भागार्द्धेन जयन्तिका निगदिता सा तस्य कस्योपरि॥
गृहस्योदयं दिग्विभागैर्विभाज्यं
द्विभागेन कक्षासनं वेदिका स्यात्।
त्रिभागेन तत्कक्षतो निम्नमेवं
गृहस्योदयार्द्धेन पीठं नृपाणाम्॥
उत्तानपट्टो नृपमन्दिरेऽसौ
हस्ते च हस्ते द्वियवोन्नतः स्यात्।
पाषाणतः सौख्यकरो नृपाणां
धनक्षयं सोऽपि करोति गेहे॥
सुधेष्टके शर्कराया वियुक्ते
सशर्करैस्तैः सुदृढ़ा गृहे भूः।
शस्ता न शस्तं भवनेषु चित्रं
कपोतगृध्राः कपिकाकरौद्रम्॥
शुद्धोऽलिन्दविशालतश्च सकला भूम्यौचरक्षान्विता
छाद्येनाप्यथ मत्तवारणयुतं मात्तं तथार्द्धोदयम्।
मौढ़ो भद्रचतुष्किकाभिरुदितो मात्तेन युक्तस्तथा
मत्तैस्तुल्यसपादकैस्तु सकुलो वा शौर्योऽशेखरः॥
राज्ञो गृहं छन्दचतुष्टयं स्यात्
तथैव घण्टाकलसेन युक्तम्।
तुङ्गारसंशस्त्वथ सिंहकर्णः
प्रासादके तेऽपि षडेव शस्ताः॥
षड्जातिगेहं तृणपर्णपट्टै-
र्व्वंशैः कड्डैर्व्वापि दृढ़ा शिलाभिः।
कृतं प्रकारैः कथितश्च षड्भि-
र्लोकप्रसिद्ध्या च परीक्षणीयम्॥"

इति राजगृहादि॥*॥

"वामे भागे दक्षिणे वा नृपाणां
पेधा कार्य्या वाटिका क्रीड़नार्थम्।
एकद्वित्रिचतुर्हस्तसंख्या शतं स्यात्
मध्ये धारामण्डपं तोययन्त्रैः॥
क्षेत्रं सप्तविभागभाजितमतो भद्रश्च भागत्रयं
तन्मध्ये जलवापिकाजिनपदैरंशतो वेदिका।
स्तम्भैर्द्वादशभिश्च मध्यरचितः कोणेषु कूपान्वितः
कर्त्तव्यो जलयन्त्र एष विधिवत् भोगाय भूमीभुजाम्॥
तस्यां चम्पककुन्दजातिसुमनोवल्याः सुनिर्व्वालुका
जातीहेमसमानकेतकिरपि श्वेता तथा पाटला।
नारङ्गः करणा वसन्तलतिका चारक्तपुष्पादिकं
जम्बीरो वदरी च पूगमधुका जम्बूश्च चूतद्रुमाः॥
मालूरः कदली च चन्दनवटावश्वत्थपक्षाशिवा-
चिञ्चाशोककदम्बनिम्बतरवः खर्ज्जूरिका दाड़िमी।
कर्पूरागुरुकिंशुका हयरिपुः पुन्नागको निम्बुकौ
प्रोक्ता नागलता च बीजनिभृता स्यात् तिन्दुकी लाङ्गली॥
द्राक्षेला शतपत्रिका च बकुला धत्तूरकंकोलकौ
शालस्तालतमालकौ सुनिवरो मन्दारपारिद्रुमौ।
अन्ये भोग्यविचित्रखाद्यसुफलाश्चैव रोपणीया बुधैः
यत्नाप्नोति न भूतले शुभतरं तत्तत्सन्न्यकान् वापयेत्।
आस्थानं प्रतिषेचनाय च घटीयन्त्रस्तुषारोद्भवं
दोला क्रीड़नखेलनाय रुचिरे वर्षावसन्तोत्सवे।
बालाप्रौढ़वधूसुमध्यवनितागानैर्मनोहारिभि-
र्ग्रीष्मे शारदकेऽथ शीतलजलक्रीड़ा शुभे मण्डपे॥

इति वाटिका॥*॥

"तुरङ्गमाणां गृहवामभागे
शाला चतुःषष्टिकरा विधेया।
शतार्द्धतो मध्यमिका च दैर्घ्यं
कनीयसी तैर्दशभिर्विहीना॥
व्यासे च ज्येष्ठा तिथिहस्तमाना
त्रयोदशैकादशकैः क्रमेण।
तद्वाह्यभित्तिश्च करप्रमाणा
पञ्चार्द्धपञ्चाश्विकरोदया स्यात्॥
तेजोहानिमपोहया विदधते पूर्व्वापरास्या नृणां
ते याम्योत्तरतो सुखादि सततं कीर्त्तिर्यशो धान्यकम्।
कर्त्तव्यो धिषणां प्रतीह कलसस्थानं द्विहस्तोदयं
तस्यास्तोरणसुच्छ्रितश्च तुनिभिर्हस्तैः सुशोभान्वितम्॥
षष्ठ्या बाधुहयाङ्गुलैर्निगदितो वेदाङ्गुलैनाधिकः
श्रीवत्सश्चहिताव एव च मनोहारी हिसशाकुलः।
रागाग्नङ्गुलकैस्तु वाजिविजयोऽशीत्या तथा भैरवः
शान्ताख्यस्तु युगाष्टमाच उदये मानं हरेः सप्तधा॥"

इत्यश्वशाला॥*॥

"सिंहद्वारं पूर्व्वमानेन कार्य्यं
चित्रका वा मालिका स्तम्भशीर्षे।
स्यातां मध्ये ताड़कौ रत्नगार्थं
तुल्यौ भागेनाधिकौ वापि सार्द्धौ॥
भागे दक्षिणवामके च करिणां शाला हरेर्द्वारतः
कर्त्तव्या सुदृढ़ोन्नता च कलसैर्घण्टादिभिर्भूषिता।
संकीर्णो रसभो गजैर्निगदितो मन्द्रा मृगाश्चाहतः
सर्व्वैर्भूतमभद्रजातिरुदितो मन्द्रैः करैरुच्छ्रितः॥"

इति गजशाला॥*॥

"अष्टोत्तरहस्तशतं दृढ़त्वे
नृपालयं चोत्तममेव तस्मात्।
अष्टाभिरष्टाभिरतो विहीनं
पञ्चैव भागाधिकतोऽपि दैर्घ्ये॥
अशीतितो रागकरैश्च हीनाः
पञ्चालया भूपसुतप्रियाश्च।

त्रिभागदैर्घ्येऽधिकतो विधेया
गृहाः क्रमेणैव यथोदिताश्च ॥
प्रोक्तं चतुःषष्टिकरं पृथुत्वे
क्रमेण षड्भिश्च करैर्विहीनम् ।
षड्भागतो दैर्घ्यमतोऽधिकं स्या-
द्भूलाधिपस्यैव च पञ्चहर्म्यैः ॥
षष्ट्या हस्तैर्मन्त्रिगेहं पृथुत्वे
हीनं हीनं पञ्चकं वेदवेदैः ।
कुर्य्याद्धस्तैरष्टमांशोऽधिकोऽसौ
व्यासादस्मिन् वर्द्धितो दैर्घ्य एव ॥
सामन्तादिकभूपतेश्च भवनं विष्ण्यब्धिहस्तैः समं
हस्तैर्वेदविहीनकैः क्रमतया भागाधिकं दैर्घ्यतः ।
देवज्ञस्य सभासदस्य गुरुतः पौरोधसं भेषजं
विंशत्यष्टकरं द्विहस्तरहितं दैर्घ्ये द्विधा तद्भवेत् ॥
वैश्याकचुकिशिल्पिनामपि गृहे वेदाधिका विंशति-
र्मानं हस्तचतुष्टयैर्विरहितं दैर्घ्येऽधिका व्यासतः ।
हर्म्यं दूतकरान्तिकस्य रचितो हस्तैः समं विस्तरे
हीनं त्वर्द्धकरेण पञ्चकमिदं तुर्य्यांशदैर्घ्याधिकम् ॥
द्वात्रिंशता मानमिदं द्विजादे-
र्हीनं चतुर्भिः क्रमतो विधेयम् ।
दिगष्टरागाब्धिविभागतश्च
क्रमेण तद्वर्णचतुष्टयेऽपि ॥
कर्णाधिकं विस्तरतोऽधिकञ्च
शोभं विनाशं समुपैति गेहम् ।
द्वारं गतं मूर्द्धि यदाग्रतश्च
तत् सन्ततेर्हानिकरं प्रदिष्टम् ॥
व्यासं सप्ततिहस्तवियुक्ते
शालामानमिदं मनुभुक्ते ।
पञ्चत्रिंशत् पुनरपि तस्मिन्
मानसुशान्ति लघोरिव वृद्धाः ॥
एकं द्वारं प्राङ्मुखं शोभनं स्यात्
चातुर्व्वर्ण्ये धातृभूपेशजैने ।
युग्मं प्राच्यां पश्चिमे स्यात्त्रिकेषु
मूलं द्वारं दक्षिणे वर्ज्जनीयम् ॥"

इति वास्तुशास्त्रे राजवल्लभमण्डने राजगृहादिलक्षणं नाम नवमोऽध्यायः ॥ * ॥

शिल्पिका, स्त्री, तृणविशेषः । जहानसिपी इति हिन्दीभाषा । तत्पर्य्यायः । शिल्पिनी २ शीता ३ क्षेत्रजा ४ मृदुच्छदा ५ । अस्या गुणाः । मूत्ररोधाश्मरीशूलज्वरपित्तापहारकत्वम् । इति राजनिर्घण्टः ॥

शिल्पिनी, स्त्री, कोलदलौषधिः । इति मेदिनी ॥

शिल्पशाला, स्त्री, क्ली, ( शिल्पिनां शाला । ) शिल्पशाला । इत्यमरटीकायां स्वामी ॥

शिल्पी, [न्] त्रि, (शिल्पं क्रियाकौशलमस्यास्तीति । इनिः ।) शिल्पकर्त्ता । (यथा, मनौ । ७ । ७५ ।
"आवृताः शिल्पिभिर्यन्त्रैर्यवसेनोदकेन च ॥")
तत्पर्य्यायः । कारुः २ । इत्यमरः ॥ अस्य विवरणं शिल्पकारशब्दे द्रष्टव्यम् । शिल्पसम्बन्धी च ॥

शिवं, क्ली, ( शी + "सर्व्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अतन्त्रे ।" उणा० १ । १५३ । वन् प्रत्ययेन साधु । ) मङ्गलम् । इत्यमरः ॥ (यथा, रघुः । १ । ६० ।
"उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीनाञ्च प्रतिहर्त्ता त्वमापदाम् ॥")
सुखम् । जलम् । इत्युणादिकोषः ॥ सैन्धवम् । समुद्रलवणम् । श्वेतटङ्कणम् । इति राजनिर्घण्टः ॥ ( मङ्गलवति, त्रि ॥ यथा, महाभारते । १ । २०८ । ३६ ।
"तत्र रम्ये शिवे देशे कौरवस्य निवेशनम् ॥")

शिवः, पुं, (शी + "सर्व्वनिघृष्वेति ।" उणा० १।१५३। इति वन्प्रत्ययेन साधुः ।) ब्रह्मणः संज्ञाविशेषः । तस्य व्युत्पत्तिर्यथा । शिवं कल्याणं विद्यतेऽस्य शिवः । श्यति अशुभमिति वा । शेरतेऽवतिष्ठन्ते अणिमादयोऽष्टौ गुणा अस्मिन् इति वा शिवः । इत्यमरटीकायां भरतः ॥ तत्पर्य्यायः । शम्भुः २ ईशः ३ पशुपतिः ४ शूली ५ महेश्वरः ६ ईश्वरः ७ सर्व्वः ८ ईशानः ९ शङ्करः १० चन्द्रशेखरः ११ भूतेशः १२ खण्डपरशुः १३ गिरीशः १४ गिरिशः १५ मृडः १६ मृत्युञ्जयः १७ कृत्तिवासाः १८ पिनाकी १९ प्रमथाधिपः २० उग्रः २१ कपर्द्दी २२ श्रीकण्ठः २३ शितिकण्ठः २४ कपालभृत् २५ वामदेवः २६ महादेवः २७ विरूपाक्षः २८ त्रिलोचनः २९ कृशानुरेताः ३० सर्व्वज्ञः ३१ धूर्ज्जटिः ३२ नीललोहितः ३३ हरः ३४ स्मरहरः ३५ भर्गः ३६ त्र्यम्बकः ३७ त्रिपुरान्तकः ३८ गङ्गाधरः ३९ अन्धकरिपुः ४० क्रतुध्वंसी ४१ वृषध्वजः ४२ व्योमकेशः ४३ भवः ४४ भीमः ४५ स्थाणुः ४६ रुद्रः ४७ उमापतिः ४८ । इत्यमरः ॥ वृषपर्व्वा ४९ रेरिहाणः ५० भगाली ५१ पांशुचन्दनः ५२ दिगम्बरः ५३ अट्टहासः ५४ कालञ्जरः ५५ पुरहिट् ५६ वृषाकपिः ५७ महाकालः ५८ वराकः ५९ नन्दिवर्द्धनः ६० हीरः ६१ वीरः ६२ खरुः ६३ भूरिः ६४ कटप्रूः ६५ भैरवः ६६ ध्रुवः ६७ शिविपिष्टः ६८ गुडाकेशः ६९ देवदेवः ७० महानटः ७१ । इति जटाधरः ॥ तीव्रः ७२ खण्डपर्शुः ७३ पञ्चाननः ७४ कण्ठेकालः ७५ भरुः ७६ भीरुः ७७ भीषणः ७८ कङ्कालमाली ७९ जटाधरः ८० व्योमदेवः ८१ सिद्धदेवः ८२ धरणीश्वरः ८३ विश्वेशः ८४ जयन्तः ८५ हररूपः ८६ सन्ध्यानाटी ८७ सुप्रसादः ८८ चन्द्रापीडः ८९ शूलधरः ९० वृषाङ्कः ९१ वृषभध्वजः ९२ भूतनाथः ९३ शिपिविष्टः ९४ वरेश्वरः ९५ विश्वेश्वरः ९६ विश्वनाथः ९७ काशीनाथः ९८ कुलेश्वरः ९९ अस्थिमाली १०० विशालाक्षः १०१ हिण्डी १०२ प्रियतमः १०३ विषमाक्षः १०४ भद्रः १०५ ऊर्द्ध्वरेताः १०६ यमान्तकः १०७ नन्दीश्वरः १०८ अष्टमूर्त्तिः १०९ अर्घीशः ११० खेचरः १११ भृङ्गीशः ११२ अर्द्धनारीशः ११३ रसनायकः ११४ । इति शब्दरत्नावली ॥ उः ११५ पिनाकपाणिः ११६ फणधरधरः ११७ कैलासनिकेतनः ११८ हिमाद्रितनयापतिः ११९ । इति कविकल्पलता ॥ तस्य सहस्रनामानि श्रीमहाभारते अनुशासनपर्व्वणि १७ अध्याये द्रष्टव्यानि ॥ * ॥ अस्य कपालिनामकारणं यथा,—

ईश्वर उवाच ।
"आसीत्तत्र वरारोहे ब्रह्मणस्तु शिरोऽपरम् ।
पञ्चमं शृणु सुश्रोणि जातं काञ्चनसुप्रभम् ॥
ज्वलन्तं परमं शीर्षं जातं तस्य महात्मनः ।
स एवमब्रवीद्देवि ! जन्म जानामि ते ह्यहम् ॥
ततः क्रोधपरीतेन संरक्तनयनेन च ।
वामाङ्गुष्ठनखाग्रेण छिन्नं तस्य शिरो मया ॥
ब्रह्मोवाच ।
यस्मादनपराधेन शिरश्छिन्नं त्वया मम ।
तस्माच्छापसमायुक्तः कपाली त्वं भविष्यसि ॥"
इति मात्स्ये १५८ अध्यायः ॥ * ॥

अथ शिवमन्त्राः । तत्र एकाक्षरमन्त्रो यथा,—
"शान्तमौकारसंयुक्तं बिन्दुभूषितमस्तकम् ।
प्रासादाख्यो मनुः प्रोक्तो भजतां कामदो मणिः ॥" हौँ ॥ * ॥

अस्य पूजा । प्रातःकृत्यादिमातृकान्यासं प्राणायामञ्च विधाय श्रीकण्ठादिन्यासं मातृकास्थानेषु कुर्य्यात् । ततः सामान्यपूजापद्धत्युक्तपीठन्यासं कृत्वा पीठशक्तीर्न्यसेत् । ततः ऋष्यादिन्यासः । ततः कराङ्गन्यासौ । ततः ईशानाद्याः पञ्चमूर्त्तीर्न्यसेत् । शूद्रस्तु एतत्पर्य्यन्तं न्यासं कृत्वा ध्यायेत् । अन्यत्रानधिकारात् । तत ऊर्द्ध्वप्राग्दक्षिणोत्तरपश्चिमेषु मुखेषु ईशानस्य पञ्चकलाः पञ्च ब्रह्म ऋचः पदादिकाः प्रणवाद्या नमोऽन्ता न्यसेत् । ततः पूर्व्वपश्चिमदक्षिणोत्तरेषु तत्पुरुषस्य चतस्रः कला विन्यसेत् । ततो हृदये ग्रीवायां अंशद्वये नाभौ कुक्षौ पृष्ठे वक्षसि अघोरस्याष्टौ कलाः न्यसेत् । ततो गुह्ये अण्डकोषे ऊरुद्वये जानुद्वये जङ्घाद्वये स्फिग्द्वये कट्यां पार्श्वयोः वामदेवस्य त्रयोदशकलाः विन्यसेत् । ततः पार्श्वयोः स्तनयोर्नासिकायां मूर्द्ध्नि बाहुयुग्मे सद्योजातस्याष्टौ कलाः न्यसेत् । ततः पञ्चाङ्गुलीषु ईशानाद्याः पञ्च ऋचो न्यसेत् । एवं मूर्द्धास्यहृदयगुह्यपादेष्वेता ऋचो न्यसेत् । ततोऽङ्गन्यासान्तरं कुर्य्यात् । एवं विन्यस्य ध्यायेत् ।
"मुक्तापीतपयोदमौक्तिकजवावर्णैर्मुखैः पञ्चभि-
स्त्र्यक्षैरञ्चितमीशमिन्दुमुकुटं पूर्णेन्दुकोटिप्रभम् ।
शूलं टङ्ककृपाणवज्रदहनान्नागेन्द्रघण्टाङ्कुशान्
पाशं भीतिहरं दधानममिताकल्पोज्ज्वलाङ्गं भजे ॥"

एवं ध्यात्वा मानसैः संपूज्य अर्घ्यस्थापनं कृत्वा शैवोक्तपीठपूजां विधाय पुनर्ध्यात्वा आवाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं कृत्वा आवरणपूजां विधाय धूपादिविसर्ज्जनान्तं कर्म्म समापयेत्। अस्य पुरश्चरणं पञ्चलक्षजपः ॥ १ ॥ * ॥ अस्याष्टाक्षरमन्त्रो यथा,—

"षड्वीरः शक्तिबद्धः कथितोऽष्टाक्षरो मनुः ॥"

ह्रीँ ॐ नमः शिवाय ह्रीँ। अस्य पूजा। प्रातःकृत्यादिशैवोक्तं पीठमन्त्रान्तं न्यासं विधाय ऋष्यादिन्यासकराङ्गन्यासान् प्राणायामञ्च कृत्वा ध्यायेत्।

"बन्धूकाभं त्रिनेत्रं शशिशकलधरं स्मेरवक्त्रं वहन्तं
हस्तैः शूलं कपालं वरदमभयदं चारुहासं भजामि।
वामोरुस्तम्भगायाः करतलविलसच्चारुरक्तोत्पलाया
हस्तेनाश्लिष्टदेहं मणिमयविलसद्भूषणायाः प्रियायाः ॥"

एवं ध्यात्वा मानसैः संपूज्यार्घ्यस्थापनं कृत्वा शैवोक्तपीठपूजां विधाय पुनर्ध्यात्वावाह्य पञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधायावरणपूजां कृत्वा धूपदानादिविसर्ज्जनान्तं कर्म्म समापयेत्। अस्य पुरश्चरणं चतुर्द्दशलक्षजपः ॥ २ ॥ * ॥ तस्याष्टाक्षरमन्त्रान्तरं यथा,—

"तारो माया वियद्बिन्दुमनुस्वारविभूषितम्।
पञ्चाक्षरसमायुक्तो वसुवर्णो मनुर्म्मतः ॥"

ॐ ह्रौँ ह्रौँ नमः शिवाय। अस्य पूजा। प्रातःकृत्यादिशैवोक्तपीठन्यासान्तं विधाय पूर्व्ववदृष्यादिन्यासं कराङ्गन्यासौ च कृत्वा ध्यायेत्।

"वन्दे सिन्दूरवर्णं मणिमुकुटलसच्चारुचन्द्रावतंसं
भालोद्यन्नेत्रमीशं स्मितसुखकमलं दिव्यभूषाङ्गरागम्।
वामोरुन्यस्तपाणेररुणकुवलयं संदधत्याः प्रियायाश्चक्रोत्तुङ्गस्तनाग्रे निहितकरतटं वेदटङ्केष्टहस्तम् ॥"

एवं ध्यात्वा मानसैः संपूज्यार्घ्यस्थापनं कृत्वा पीठपूजां विधाय पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधाय आवरणपूजां कृत्वा धूपादिविसर्ज्जनान्तं कर्म्म समापयेत्। अस्य पुरश्चरणमष्टलक्षजपः ॥ ३ ॥ * ॥ अथास्य मृत्युञ्जयाख्यमन्त्रः।

"तारं स्थिरा सकर्णेन्दुर्भृगुः सर्गसमन्वितः।
त्र्यक्षरात्मा निगदितो मन्त्रो मृत्युञ्जयात्मकः ॥"

ॐ जुँ सः। अस्य पूजा। प्रातःकृत्यादिशैवोक्तपीठन्यासान्तं विधाय ऋष्यादिन्यासं कराङ्गन्यासौ च कृत्वा ध्यायेत्।

"चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मद्वयान्तःस्थितं
मुद्रापाशमृगाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम्।
कोटीरेन्दुगलत्सुधाप्लुततनुं हारादिभूषोज्ज्वलं
कान्त्या विश्वविमोहनं पशुपतिं मृत्युञ्जयं भावये ॥"

एवं ध्यात्वा मानसैः सम्पूज्यार्घ्यस्थापनं कृत्वा पीठमन्त्रान्तां पीठपूजां विधाय पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं कृत्वा आवरणपूजां विधाय धूपादिविसर्ज्जनान्तं कर्म्म समापयेत्। अस्य पुरश्चरणं लक्षत्रयजपः ॥ ४ ॥ * ॥ अथास्यापरद्वादशाक्षरमृत्युञ्जयमन्त्रः।

"मृत्युञ्जयं समुच्चार्य्य पालय द्वितयं वदेत्।
मृत्युञ्जयं समुच्चार्य्य पुनरेव विलोमतः ॥
द्वादशाक्षरोऽयं मन्त्रः स्यात् मृत्युञ्जयाभिधोऽपरः ॥"

ॐ जुँ सः पालय पालय ॐ जुँ सः। अस्य ध्यानपूजादिकं सर्व्वं पूर्व्ववत् ॥ ५ ॥ * ॥ अस्य द्वाविंशत्यक्षरमन्त्रः।

"प्रणवो हृदयं पश्चात् ततो भगवते पदम्।
ङेऽन्तञ्च दक्षिणामूर्त्तिं मह्यं मेधामुदीरयेत्।
प्रयच्छ ठद्वयान्तोऽयं द्वाविंशत्यक्षरो मनुः ॥"

ॐ नमो भगवते दक्षिणामूर्त्तये मह्यं मेधां प्रयच्छ स्वाहा। अस्य पूजा। प्रातःकृत्यादिशैवोक्तपीठमन्त्रान्तं विन्यस्य ऋष्यादिन्यासं कराङ्गन्यासौ च कृत्वा ध्यायेत्।

"वटवृक्षं महोच्छ्रायं पद्मरागफलोज्ज्वलम्।
नानारत्नमयैः पत्रैर्विचित्रैरुपशोभितम् ॥
नवरत्नमहाकल्पैर्लम्बमानैरलङ्कृतम्।
विचिन्त्य वटमूलस्थं चिन्तयेल्लोकनायकम् ॥
स्फटिकरजतवर्णं मौक्तिकीमक्षमाला-
ममृतकलशविद्याज्ञानमुद्राः कराब्जैः।
दधतमुरगकक्षं चन्द्रचूडं त्रिनेत्रं
विधृतविविधभूषं दक्षिणामूर्त्तिमीडे ॥"

एवं ध्यात्वा मानसैः सम्पूज्य अर्घ्यस्थापनादिशैवोक्तपीठपूजां विधाय पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधायावरणपूजां कृत्वा धूपादिविसर्ज्जनान्तं कर्म्म समापयेत्। अस्य पुरश्चरणं लक्षजपः ॥ ६ ॥ * ॥ अथास्य मन्त्रान्तरम्।

"अग्निसव्यश्रुत्यादित्यरात्रिनिशो वस्तुबिन्दुमत्।
चिन्तामणिरिति ख्यातं बीजं सर्व्वसमृद्धिदम् ॥"

र-क्ष म-र य-औ ऊँ ॥ प्रपञ्चसारे।

"क्षमलक-ष-मरेफ-प्राक्षसव्यान्तवाम-
श्रुतिहिमरुचिखण्डैर्मण्डितो मन्त्रराजः ॥"

अस्य पूजा। प्रातःकृत्यादिशैवोक्तपीठमन्त्रान्तं विन्यस्य ऋष्यादिन्यासं कराङ्गन्यासौ च कृत्वा ध्यायेत्।

"नीलप्रवालरुचिरं विलसत्त्रिनेत्रं
पाशारुणोत्पलकपालकशूलहस्तम्।
अर्द्धाम्बिकेशमनिशं प्रविभक्तभूषं
बालेन्दुबद्धमुकुटं प्रणमामि रूपम् ॥"

एवं ध्यात्वा मानसैः संपूज्यार्घ्यं संस्थाप्य शैवोक्तपीठपूजां विधाय पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं कृत्वा आवरणपूजां विधाय धूपादिविसर्ज्जनान्तं कर्म्म समापयेत्। अस्य पुरश्चरणं लक्षजपः। अयं अर्द्धनारीश्वरः ॥ ७ ॥ * ॥

"पार्श्वो वह्निसमारूढस्तारवामाद्यमीरितम्।
धान्तो वह्निसमारूढस्तूर्य्यस्वरसमन्वितः ॥
बिन्दुमांस्तु द्वितीयः स्यात् टान्तः सर्गी तृतीयकः।
नीलकण्ठात्मको मन्त्रो विषद्वयहरः परः ॥"

प्रमाणान्तरम्।

"लोहितोऽग्न्यासनः सत्यो बिन्दुमान् प्रथमं पुनः।
द्वितीया वह्निबीजस्था दीर्घा शान्तीन्दुभूषिता ॥
तृतीया लाङ्गली सर्गी मन्त्रो बीजत्रयात्मकः।
नीलकण्ठात्मको मन्त्रो विषद्वयहरः परः ॥"

प्रोँ ग्रीँ ठः इति मन्त्रः। अस्य पूजा। प्रातःकृत्यादिशैवोक्तपीठन्यासान्तं कृत्वा ऋष्यादिन्यासं कराङ्गन्यासौ च विधाय ध्यानं कुर्य्यात्।

"बालार्कायुततेजसं धृतजटाजूटेन्दुखण्डोज्ज्वलं
नागेन्द्रैः कृतशेखरं जपवटीं शूलं कपालं करैः।
खट्वाङ्गं विधृतं त्रिनेत्रविलसत्पञ्चाननं सुन्दरं
व्याघ्रत्वक्परिधानमब्जनिलयं श्रीनीलकण्ठं भजे ॥"

एवं ध्यात्वा मानसैः संपूज्य अर्घ्यस्थापनादिशैवोक्तपीठपूजां विधाय पुनर्ध्यात्वा आवाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं कृत्वा आवरणपूजां विधाय धूपादिविसर्ज्जनान्तं कर्म्म समापयेत्। अस्य पुरश्चरणं त्रिलक्षजपः। अयं नीलकण्ठः ॥ ८ ॥ * ॥ अस्याष्टाक्षरमन्त्रो यथा,—

"तारो हृन्नीलकण्ठाय मन्त्रश्चाष्टाक्षरः परम्।

ॐ नमो नीलकण्ठाय। अस्य पूजादिकं सर्व्वं पूर्व्ववत् ॥ ९ ॥ * ॥ अस्य पञ्चाक्षरमन्त्रः षडक्षरमन्त्रश्च यथा,—

"हृदयं वपरं शान्तिन् लान्तोऽनन्तान्वितो भवेत्।
पञ्चाक्षरो मनुः प्रोक्तस्तारादोऽयं षडक्षरः ॥"

नमः शिवाय। ॐ नमः शिवाय। अस्य पूजा। प्रातःकृत्यादिशैवोक्तपीठमन्त्रान्तं न्यासं विधाय ऋष्यादिन्यासं कुर्य्यात्। ततो मूर्त्तिन्यासः। ततः कराङ्गन्यासौ। ततो गोलकन्यासः। ततो व्यापकन्यासं प्राणायामञ्च कृत्वा ध्यायेत्।

"ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम्।
पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्वबीजं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥"

एवं ध्यात्वा मानसैः सम्पूज्यार्घ्यस्थापनं कृत्वा शैवोक्तपीठपूजां विधाय पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधायावरणपूजां कृत्वा धूपादिविसर्ज्जनान्तं कर्म्म समापयेत्

